सदाशिवः शिवा ब्रह्मा भरत कश्यपो मुनिः ।
मतङ्गो याष्टिको दुर्गा शक्तिः शार्दूलकोहलौ ॥ १५ ॥
विशाखिलो दत्तिलश्च कम्बलो ऽश्वतरस्तथा ।
वायुर्विश्वावसू रम्भा ऽर्जुनो नारदतुम्बुरू ॥ १६ ॥

**यज्वभिरिति** । यज्वभिर्याज्ञिकैरलकृत । यस्मिन्वश एवविधा समुत्पन्ना इत्यर्थ ॥ तस्मिन्वशे समुत्पन्न विशिष्ट मूलपुरुष कथयति—तत्रेति । सूर्यसदृशो भास्करनामा तेजसा निधिर्ब्रह्मवर्चसाश्रय , पक्षे कान्त्याश्रय , दक्षिणाऽऽयन काश्मीरदेशाद्दक्षिणा दिश प्रत्यागमनम् , अथ वा दक्षिणाया देयद्रव्यस्यायन पात्रप्रापण चक्रे, दक्षिणाना प्रवीणानामाशा वाञ्छामलकर्तुम् । सूर्यपक्षे दक्षिणाऽयन प्रसिद्धमेव ॥ ग्रन्थस्य कर्ता स्वपितर कथयति—तस्येति । भिल्लम भिल्लमनामान राजानम् । जैत्रे जत्रनामनि नगरे ॥ स्वस्वामिन सिङ्घणभूप वर्णयति—एक इति । यस्य प्रतापानलो विश्वव्याप्यपि द्विषा हृदयान्येव दहतीति कारणे सत्यपि कार्यानुदयाद्विशेषोक्तिरलकार ॥ सिङ्घणदेवप्रसादप्रभाव कथयति—त प्रसाद्येति । त सिङ्घण गुणग्रामेण गुणसमूहेन प्रसाद्य प्रसन्न कृत्वा । गुणरागिणमिति साभिप्रायविशेषणत्वात्परिकरालकार । उपकारैरुपकारसाधनैर्द्रव्यवस्त्रान्नादिभि ॥ किं न ददौ? सर्वमेव ददावित्यर्थ । एव न किं जज्ञावित्यादिषु ॥ य एवविध सोढलनामा तस्मात्क्षीरसमुद्राच्छार्ङ्गदेवश्चन्द्र उत्पन्न इति सबन्ध । उपर्युपरीति । उपरिशब्द स्याम्रेडितत्वात्सर्वानिति द्वितीया ॥ ग्रन्थे वैशिष्ट्यप्रतिपादनाथमात्मान वर्णयति कृतेति ॥ स्ववैदुष्य प्रकटयति—नानेति । सहवास काश्मीरदेशे सरस्वत्यवस्थानाच्छार्ङ्गदेवस्यापि काश्मीरदेश उत्पन्नत्वात् ॥ स इति । स शार्ङ्गदेव सगीतरत्नाकरमाविष्करोति रचयतीति सबन्ध । नि श्रेयसाप्तये मोक्षप्राप्तये, मद्रकादीना प्रकरणाख्याना गीतानाम् 'शिवस्तुतौ प्रयोज्यानि मोक्षाय विदधे विधि' ' इति मोक्षहेतुत्वस्य वक्ष्यमाणत्वात् ॥ २—१४ ॥

(क०) इह शास्त्रे प्रेक्षावत्प्रवृत्तय सदाशिवाद्यनेकप्रामाणिकपरिग्रह दर्शयित्वा तन्मतसारसग्रहत्वेन स्वकीयस्य ग्रन्थस्यातिशयितत्व द्योतयति—

आञ्जनेयो मातृगुप्तो रावणो नन्दिकेश्वरः ।
स्वातिर्गणो बिन्दुराजः क्षेत्रराजश्च राहल. ॥ १७ ॥
रुद्रटो नान्यभूपालो भोजभूवल्लभस्तथा ।
परमर्दी च सोमेशो जगदेकमहीपतिः ॥ १८ ॥
व्याख्यातारो भारतीये लोल्लटोद्भटशङ्कुकाः ।
भट्टाभिनवगुप्तश्च श्रीमत्कीर्त्तिधरः परः ॥ १९ ॥
अन्ये च बहवः पूर्वे ये सगीतविशारदाः ।
अगाधबोधमन्थेन तेषा मतपयोनिधिम् ॥ २० ॥
निर्मथ्य श्रीशार्ङ्गदेवः सारोद्धारमिम व्यधात् ।
गीत वाद्य तथा नृत्त त्रय सगीतमुच्यते ॥ २१ ॥

**सदाशिवः शिवेत्यादिना सारोद्धारमिम व्यधा**दित्यन्तेन । सारोद्धारो नवनीत तमिममिति व्यस्तरूपणम्, सारस्योद्धारो यस्मिन्कर्मणीति क्रिया विशेषण वा ॥ १५—२० ॥

(मु०) ननु सदाशिवभरतादिप्रणीतेषु सगीतग्रन्थेषु सत्सु [1]किमनेनाफलनिर्माणक्लेशेनेत्यत आह—सदाशिव इति । एतेषा मतपयोनिधि निर्मथ्य सारोद्धारमिम व्यधादकार्षीत् । अतश्च ते वितता दुर्ग्रहा बहवश्च ग्रन्था अचिरजीविभिर्मनुष्यैरालोडयितुमशक्या इत्यल्पप्रयासेनैव सकलसगीतरहस्यावबोधसिद्धेर्नास्य प्रयासस्य वैफल्यमिति, एतानि च शास्त्राण्यालोच्य कृतत्वेनास्य समूलत्वात्प्रेक्षावद्भि प्रमाणत्वेनोपादेयो ऽयमित्यप्यनेन कथयति ॥ १९—२० ॥

(क०) ननु, 'आविष्करोति सगीतरत्नाकरमुदारधी ' इति प्रतिज्ञाया सगीतशब्देन लोकप्रसिद्ध्या गीतस्यैव ग्रन्थप्रतिपाद्यत्व प्रतीयते न तु

[1] किमनेनाधुनिकनिर्मा०

**मार्गो देशीति तद् द्वेधा तत्र मार्गः स उच्यते ।**
**यो मार्गितो विरिञ्च्याद्यै [1] प्रयुक्तो भरतादिभिः ॥ २२ ॥**
**देवस्य पुरत शभोर्नियताभ्युदयप्रदः ।**
**देशे देशे जनाना यद्रुच्या हृदयरञ्जकम् ॥ २३ ॥**

वाद्यनृत्तयोरित्याशङ्का परिजिहीर्षु सगीतशब्दार्थमाह—**गीत वाद्यमिति** । यदि गीतमेव प्रतिपाद्येत तदा केवल गीतशब्द प्रयुञ्जीत न तु समुपसर्गं युक्तम् । ननु गीतस्यैव सम्यक्त्वद्योतनार्थं समुपसर्ग इति चेन्न, 'रञ्जक स्वरसदर्भो गीतमित्यभिधीयते' इति विशिष्टवचनादनुपसृष्टस्यैव तस्य गीतस्य सम्यक्त्वसिद्धे । समित्युपसर्गस्तु गीतशब्देन सह प्रयुज्यमानो गीते स्वेनाधेयातिशयाभावाद्गीतस्यान्ययोग द्योतयञ्शब्दत्वसामान्येन वाद्यस्य तदुभयाभिव्यञ्जकत्वेन[2] नृत्तस्य च गीतेन सबन्ध विशिनष्टि । तम्माद्यत्र सगीतशब्दस्य प्रयोगस्तत्र तौर्यत्रिक विवक्षितमिति मन्तव्यम् । क्वचिद्गीतमात्रे सगीतशब्दप्रयोगस्त्ववयवे ऽवयव्युपचारात्खण्डपटे पटव्यवहारवत् ॥ -२१ ॥

(सु०) सगीतग्रन्थो विरच्यत इत्युक्तम् । तत्र किमिद सगीतमित्यपेक्षायामाह—**गीतमिति** । नन्वेव समुदिताना सगीतत्व एकैकस्यासगीतत्वापत्ति , नैवम्, गीतवाद्यनृत्तान्यतमत्वस्य सगीतशब्दप्रवृत्तिनिमित्तत्वात् ॥ -२१ ॥

(क०) तस्य सगीतस्य मार्गदेशीभदेन द्वैविध्य प्रतिज्ञाय तयो निरुक्तिपूर्वक लक्षणमाह-—**मार्गो देशीत्यादिना** । मार्गितत्वान्मार्ग । मार्गितत्व च विरिञ्चाद्यैर्ब्रह्मादिभि 'नाट्यसञ्ज्ञमिद वेद सेतिहास करोम्य-

[1] विरिञ्चाद्यै

[2] ० व्यङ्ग्यत्वेन

**गीत च वादन नृत्त तद्देशीत्यभिधीयते ।**
**नृत्त वाद्यानुग प्रोक्त वाद्य गीतानुवर्ति च ॥ २४ ॥**
**अतो गीत प्रधानत्वादत्रादावभिधीयते ।**
**सामवेदादिद गीत सजग्राह पितामह ॥ २५ ॥**

हम्' इति प्रतिज्ञाय चतुर्षु वेदेष्वन्विष्य कृतत्वात् । मार्गित इति 'मार्ग अन्वेषणे' इत्यस्माद्धातो कर्मणि निष्ठाया रूपम् । मार्ग इति तु तस्मादेव धातो कर्मणि घञन्तम् । देशीति, देशशब्देन तत्रत्या जना लक्ष्यन्ते, तैर्यथेच्छ क्रियमाणाया गीतादिक्रियायामाचार्यकृता सज्ञा । सगीतपदाभि धेयत्वेन नाट्य प्रत्यङ्गत्वेन च त्रयाणामप्यविशेषेण प्रतिपादने प्राथम्य प्रसक्तौ, तत्र 'गीतवाद्यप्रमाणेन कुर्याच्चाङ्गविचेष्टितम्' इति 'गीत चतुर्विधाद्वाद्याज्जायते चोपरज्यते, गीयते च' इति गीतस्य स्वेतरद्वया पेक्षितत्वेन प्राधान्य प्रसाध्य प्राथम्य प्रतिजानीते—**नृत्त वाद्यानुगमिति** ॥ २२—२४- ॥

(सु०) तस्य सगीतस्य मार्गतादेशीत्वाभ्या द्वैविध्यमुक्त्वा मार्गस्य लक्षण कथयति—**यो मार्गित** इति । मार्गितो ऽन्वेषितो दृष्ट । अनेन मार्गशब्दव्यु त्पत्तिरपि सूचिता । देशीलक्षण कथयति—**देश** इति । गीतस्य पूर्वनिरूपणे कारणमाह—**नृत्तमिति** ॥ २२—२४- ॥

(क०) गीतस्य सामवेदसग्रहरूपत्वेन वैदिकत्वादुपादेयत्व दर्शयति—**सामवेदादिदमिति** । तत्सग्रहरूपत्व च गीतस्यापि सप्तस्वरात्मकत्वात् । सामनि हि क्रुष्टप्रथमद्वितीयतृतीयचतुर्थमन्द्रातिस्वार्याख्या सप्त स्वरा , इह तु त एव यथायोग षड्जादिव्यपदेशभाज इति । ब्रह्मणा ऽपि वेदादुद्धृत्य सग्रहणे सार्ववर्णिकत्व प्रयोजनमिति भाव ॥ -२५ ॥

गीतेन प्रीयते देव सर्वज्ञ पार्वतीपतिः ।
गोपीपतिरनन्तो ऽपि वशध्वनिवश गतः[1] ॥ २६ ॥
सामगीतिरतो ब्रह्मा वीणाऽऽसक्ता सरस्वती ।
किमन्ये यक्षगन्धर्वदेवदानवमानवा[2] ॥ २७ ॥
अज्ञातविषयास्वादो बाल पर्यङ्किकागत ।
रुदन्गीतामृत पीत्वा हर्षोत्कर्ष प्रपद्यते ॥ २८ ॥
वनेचरस्तृणाहारश्चित्र मृगशिशु पशुः ।
लुब्धो लुब्धकसगीते गीते यच्छति जीवितम् ॥ २९ ॥
तस्य गीतस्य माहाऽऽत्म्य के प्रशसितुमीशते ।
धर्मार्थकाममोक्षाणामिदमेवैकसाधनम् ॥ ३० ॥

(सु०) गीतस्य समूलत्वमाह—सामवेदादिति । सजग्राह सग्रहेणोक्तवान् ॥ -२५ ॥

(क०) एतच्च न केवल वैदिकमित्युपादेयम , किं त्वासर्वज्ञपार्वतीपत्याधीविकलपशु विगलितवेद्यान्तरतया ऽऽनन्दाविर्भावकत्वेन हृद्यत्वा च्चेत्याह—**गीतेनेत्यादिना** ॥ २६—२९ ॥

(सु०) गीतप्रयोजनमाह—**गीतेनेति** ॥ गीत स्तौति—**अज्ञातेति** । लुब्धो ऽनुरक्त । लुब्धको व्याध ॥ २६—२९ ॥

(क०) प्रतिनियतसाधनानामपि धर्मार्थकाममोक्षाणामिदमेकमेव रमणीय साधन यतस्तस्मादस्य माहाऽऽत्म्य वर्णयितु न केचन शक्ता इत्याह—

[1] ०वशवद
[2] ०किंनरा

**तत्र स्वरगताध्याये प्रथमे प्रतिपाद्यते ।**
**शरीर नादसभूतिः स्थानानि श्रुतयस्तथा ॥ ३१ ॥**
**ततः शुद्धाः स्वराः सप्त विकृता द्वादशाप्यमी ।**
**कुलानि जातयो वर्णा द्वीपान्यार्षं च दैवतम् ॥ ३२ ॥**

**तस्येति** । गीतस्य धर्मसाधनत्व तावदश्वमेधप्रकरणे ‘ ब्राह्मणौ वीणागाथिनौ गायत   ब्राह्मणो ऽन्यो गायेत्’ इति श्रुतेर्देवार्चनादिषु गीतादेस्तदङ्गत्वेन परिग्रहाच्च सिद्धम् । अर्थसाधनत्व लोकतो दृष्टम् । कामसाधनत्व तु ‘ तस्माद्गायन्त स्त्रिय कामयन्ते ’ इति वेदतो लोकतश्च सिद्धम् । मोक्षसाधनत्व च—

‘ वीणावादनतत्त्वज्ञ श्रुतिजातिविशारद ।
तालज्ञश्चाप्रयासेन मोक्षमार्ग स गच्छति ॥ ’

इति याज्ञवल्क्यस्मृते , प्रकरणाख्यमद्रकादिगीतेषु ‘ शिवस्तुतौ प्रयोज्यानि मोक्षाय विदधे विधि ’ इत्युक्तत्वाच्च ॥ ३० ॥

(सु०) धर्मार्थेति । परमेश्वराराधनार्थं गीयमान गीत धर्महेतु , यथोक्तलक्षणाना जात्यादीना सम्यक्प्रयोगस्य ‘अपि ब्रह्महण पापाज्जातय प्रपुनन्त्यमू ’ इत्यादिना धर्महेतुत्वस्य वक्ष्यमाणत्वात् । गीतोपजीविनामर्थसाधनम् । शृङ्गारस्योद्दीपनविभावरूपत्वात्कामसाधनम् । मद्रकादीना मोक्षसाधनत्व च वक्ष्यते ॥ ३० ॥

(क०) सप्ताध्याय्या रत्नाकरे प्रत्यध्याय वस्तूनि सजिघृक्षन्नादौ स्वरगताध्याये शरीरादीन्पदार्थान्सगृह्य प्रतिपादयितु प्रतिजानीते—**तत्र स्वरगताध्याय इत्यादिना** । एतावान्वस्तुसग्रह प्रतिपाद्यत इति योजना ।

छन्दासि विनियोगाश्च स्वराणा श्रुतिजातय: ।
ग्रामाश्च मूर्च्छनास्ताना: शुद्धा: [1]कूटाश्च सख्यया ॥ ३३ ॥
प्रस्तार खण्डमेरुश्च नष्टोद्दिष्टप्रबोधक ।
स्वरसाधारणं जातिसाधारणमत: परम् ॥ ३४ ॥
काकल्यन्तरयो: सम्यक्प्रयोगो वर्णलक्षणम् ।
त्रिषष्टिरप्यलंकारास्त्रयोदशविध तत: ॥ ३५ ॥
जातिलक्ष्म ग्रहाशादि कपालानि च कम्बलम् ।
नानाविधा गीतयश्चेत्येतावान्वस्तुसग्रह: ॥ ३६ ॥

स्वरगताध्याय इति । स्वराननुगता स्वरगता श्रुतिग्राममूर्च्छनातान-वर्णालकारजातिगीत्यादयो विधेया, तेषामध्याये । अधीतिरेवाध्याय इति भावे घञन्त । अधीयते ऽनेनाभिप्रेतो ऽर्थो ऽस्मिन्वेत्यध्याय इति 'अकर्तरि च-' इति करणाधिकरणयोर्वा । यद्वा, अधीत्यधिकारे, अयनमाय, आयो ऽर्थावगति, अर्थावगतिमधिकृत्य प्रवृत्तो ग्रन्थो ऽध्याय । अथ वा, ईयते गम्यत इत्यायो ऽर्थ, तमधिकृत्य प्रवृत्तो ग्रन्थो ऽध्याय । ननु, पूर्वत्र गीतस्य प्रतिपादने प्राथम्य प्रतिज्ञातम्, इदानीं प्रथमे स्वरगताध्याय इत्यधिकृत्य शरीरादिप्रतिपादनस्य प्राथम्यमुच्यते, अत प्रतिज्ञाप्रतिपादनयोर्भिन्नविषयत्वाद्वैयधिकरण्यमिति चेन्नैष दोष, स्वरगते शरीरादे परपरया गीत प्रत्युपकारकत्वात्स्वरगतप्रतिपादन प्रकारान्तरेण गीतप्रतिपादनमेवेत्यविरोधात् । तत्र शरीरादिर्त्रिंशत्पदार्थाना मध्ये केषाचित्कार्यकारणभावादिसगतिवशादुद्देशक्रमो विवक्षित, केषा-चित्तदभावेनाविवक्षित । उत्तरत्रायमर्थ प्रकाश्यते ॥ ३१— ३६ ॥

[1] कूटा स्वसख्यया

**अथ रागविवेकाख्ये ऽध्याये वक्ष्यामहे क्रमात् ।**
**ग्रामरागाश्चोपरागान्रागान्भाषा विभाषिका: ॥ ३७ ॥**
**ततो ऽप्यन्तरभाषाश्च रागाङ्गाण्यखिलान्यपि ।**
**भाषाऽङ्गाण्यप्युपाङ्गानि क्रियाऽङ्गाणि च तत्त्वत: ॥ ३८ ॥**
**तत: प्रकीर्णकाध्याये तृतीये कथयिष्यते ।**
**वाग्गेयकारो गान्धर्व: स्वरादिर्गायनस्तथा[1] ॥ ३९ ॥**
**गायनी गुणदोषाश्च तयो: शब्दभिदास्तथा ।**
**गुणदोषाश्च शब्दस्य शारीर तद्गुणास्तथा ॥ ४० ॥**
**तद्दोषा गमक स्थाया आलप्तिर्बृन्दलक्षणम् ।**

(सु०) स्वरगताध्यायवस्तुसग्रह कथयति—तत्रेति । शरीर नादोत्पत्याश्रय । नादसभूतिर्नादोत्पत्तिप्रकार । स्थानानि हृदयादीनि ॥ त्रयोदशविध जातिलक्ष्म—ग्रह, अश, तार, मन्द्र, न्यास, अपन्यास, सन्यास, विन्यास, बहुत्वम्, अल्पता, अन्तरमाग, षाडवम्, औडुवित चेति । अन्यत्सुगमम् ॥ ३१—३६ ॥

(क०) ततो द्वितीये ऽध्याये ग्रामरागादयो दशविधरागा प्रतिपाद्यन्त इत्याह—**अथेति** । **रागविवेकाख्य** इति । रागाणा शुद्धकैशिकमध्यमादीना विवेको विवेचनमसकीर्णतया स्वरूपनिरूपणमस्मिन्निति स तथोक्त ॥ ३७, ३८ ॥

(सु०) द्वितीयाध्यायवस्तुसग्रह कथयति—**अथ रागेति** । अखिलान्यपीति । प्राक्प्रसिद्धान्यधुना प्रसिद्धानि चेत्यर्थ ॥ ३७, ३८ ॥

(क०) तृतीये वाग्गेयकारादयो द्वादश पदार्था लक्ष्यन्त इत्याह—

[1] ०गायकस्तथा

ततः प्रबन्धाध्याये तु धातवोऽङ्गानि जातयः ॥ ४१ ॥
प्रबन्धाना द्विधा सूडः शुद्धश्छायालगस्तथा ।
आलिक्रमप्रबन्धाश्च सूडस्था आलिसश्रया ॥ ४२ ॥
विप्रकीर्णास्ततश्छायालगसूडसमाश्रिता ।
गीतस्था गुणदोषाश्च वक्ष्यन्ते शार्ङ्गसूरिणा ॥ ४३ ॥
तालाध्याये पञ्चमे तु मार्गताला कलास्तथा ।
पाता मार्गाश्च चत्वारस्तथा मार्गकलाऽष्टकम् ॥ ४४ ॥
गुरुलघ्वादिमान चैककलत्वादयो भिदाः ।
पादभागास्तथा मात्रास्ताले पातकलाविधिः ॥ ४५ ॥

**ततः प्रकीर्णके**ति । प्रकीर्णा शास्त्रेपु तत्र तत्र विक्षिप्ता पदार्था अत्रैकत्र समुच्चित्याधिक्रियन्त इति प्रकीर्णक ॥ ३९—४०- ॥

(सु०) तृतीयाध्यायवस्तुसग्रह कथयति—तत इति । तयोर्गायनीगायनयो । शब्दभिदा शब्दभेदा खाहुलादय । तद्गुणा शारीरगुणा । तद्दोषा शारीरदोषा । गमक स्वरस्य कम्प । स्थाया गीतस्यावयवा ॥ ३९—४०- ॥

(क०) चतुर्थे धातुप्रभृतीनि द्वादश वस्तूनि विस्तार्यन्त इत्याह—**तत. प्रबन्धाध्याय** इति । प्रबन्धानामेलादीनामध्याये ॥ ४१—४३ ॥

(सु०) चतुर्थाध्यायवस्तुसग्रह कथयति—तत प्रबन्धेति । धातव प्रबन्धावयवा उद्ग्राहादयश्चत्वार । अङ्गानि स्वरादीनि षट् । जातयो मेदिन्यादय· पञ्च । शुद्ध सूड एलादि । छायालग सूडो ध्रुवमण्ठादि ॥ ४१—४३ ॥

(क०) पञ्चमे मार्गतालादय एकविंशतिरर्था प्रपञ्च्यन्त इत्याह—**तालाध्याय** इति ॥ ४४—४७- ॥

अङ्गुलीना च नियमो भेदा युग्मादयस्तथा ।
परिवर्तो लयस्तेषा यतयो गीतकानि च ॥ ४६ ॥
छन्दकादीनि गीतानि तालाङ्गनिचयस्तथा ।
गीताङ्गानि च वक्ष्यन्ते देशीतालाश्च तत्त्वतः ॥ ४७ ॥
निःशङ्कशार्ङ्गदेवेन ताला॒ना प्रत्ययास्तथा ।
षष्ठे नानाविध वाद्यमध्याये कथयिष्यते ॥ ४८ ॥
सप्तमे नर्तन नानारसभावाः क्रमेण च ॥

(सु०) पञ्चमाध्यायपदार्थसग्रहमाचष्टे—**तालाध्याय** इति । मार्गताला-श्चच्चत्पुटादय । कला नि शब्दक्रिया । पाता सशब्दक्रिया । मार्गाश्चत्वारो ध्रुवादय । कलाऽष्टक ध्रुवकादि । परिवर्त पादभागादेरावृत्ति । लयस्तालक्रिया-ऽन्तरालवर्ती काल । यतिर्लयप्रवृत्तिनियम । गीतानि मद्रकादीनि सप्त । देशीताला विंशत्युत्तर शतमादितालादय । प्रतीयन्ते यैस्तालसख्यास्वरूपादय इति प्रत्यया प्रस्तारनष्टोद्दिष्टादय ॥ ४४—४७- ॥

(क०) षष्ठे ततादिचतुर्विधवाद्यानामवान्तरभेदेनानेकप्रकार वाद्य निगद्यत इत्याह—**षष्ठे नानाविधमिति** ॥ सप्तमे प्रतिपाद्यानाह—**सप्तम** इति । नर्तनमिति नाट्यनृत्यनृत्ताना गात्रविक्षेपरूपाणा सामान्यवचनम् । **नानारसभावा** इति । शृङ्गारादयो नव रसा । विभावादय पञ्चविधा भावा । **क्रमेणेति** । उद्देशक्रमेणेत्यर्थ ॥ -४८, ४८- ॥

(सु०) षष्ठसप्तमाध्याययोर्वस्तुसग्रह कथयति—षष्ठ इति ॥ ४८, ४८- ॥

**इति प्रथमे स्वरगताध्याये पदार्थसग्रहाख्यमादिम प्रकरणम् ॥ १ ॥**

---

# अथ द्वितीय पिण्डोत्पत्तिप्रकरणम्

गीत नादात्मक वाद्य नादव्यक्त्या प्रशस्यते ।
तद्द्वयानुगत नृत्त नादाधीनमतस्त्रयम्[1] ॥ १ ॥
नादेन व्यज्यते वर्णः पद वर्णात्पदाद्वचः ।
वचसो व्यवहारो ऽय नादाधीनमतो जगत् ॥ २ ॥
आहतो ऽनाहतश्चेति द्विधा[2] नादो निगद्यते ।
सो ऽय प्रकाशते पिण्डे तस्मात्पिण्डो ऽभिधीयते ॥ ३ ॥

(क०) ननु गीतनिदानत्वेन स्वरगते नादस्य प्रथम प्रतिपाद्यत्वमस्तु, किं शरीरनिरूपणेनेत्याशङ्क्य, नादमात्रस्य शरीरमन्तरेण प्रकाशाभावादिति परिहरञ्शरीर निरूपयितुमाह—**गीत नादात्मकमिति**। अयमर्थ —न केवल गीतादित्रयस्य नादाधीनत्वम्, वाङ्मूलस्य सर्वलोकव्यवहारस्यापि नादाधीनत्वात्तदाधार शरीरमादौ सुतरा निरूपणीयमेवेति ॥ १—३ ॥

(सु०) एव पदार्थसग्रहमुक्त्वा नादाभिव्यक्ते स्थान शरीर कथयितु नाद स्तौति—गीतमिति। नादात्मक नाद आत्मा स्वरूप यस्य। वाद्य वीणादि नादाभिव्यक्त्यैव प्रशस्यते रमणीयतामुपैति। नृत्त तद्द्वयानुगतम्, 'अङ्गेनाल-म्बयेद्गीतम्' इत्युक्तत्वात्। अत, त्रय गीतनृत्तवाद्यरूप नादाधीन नादापेक्ष-मित्यर्थ ॥ न केवल गीतनृत्तवाद्यमेव नादापेक्षम्, अपि तु सर्व जगदित्याह—नादेनेति। नादेन ध्वनिना वर्ण ककारादिर्व्यज्यते। को ऽय ध्वनि ? यो ऽय वर्णविशेषमप्रतिपद्यमानस्य दूरात्कर्णपथमवतरति मन्दत्वतीव्रत्वादिभेद च वर्णेष्वा-सञ्जयति स ध्वनिरित्युच्यते। वर्णात्पद घट इत्यादि। पदाद्वचो वाक्य पदसमु-

[1] ०मिद त्रयम्
[2] द्वेधा

**अस्ति ब्रह्म चिदानन्द स्वयज्योतिर्निरञ्जनम् ।**
**ईश्वरं लिङ्गमित्युक्तमद्वितीयमज विभु ॥ ४ ॥**
**निर्विकारं निराकार सर्वेश्वरमनश्वरम् ।**
**सर्वशक्ति च सर्वज्ञ तदंशा जीवसञ्ज्ञका: ॥ ५ ॥**

दाय । वचसो वाक्याच्छाब्दो ऽय व्यवहार । अत सर्व जगदपि नादाधीन-मित्यर्थ । मतङ्गेनापि बृहद्देश्यामुक्तम्—

'न नादेन विना गीत न नादेन विना स्वरा ।
न नादेन विना नृत्त तस्मान्नादात्मक जगत् ॥
नादरूप स्मृतो ब्रह्मा नादरूपो जनार्दन ।
नादरूपा परा शक्तिर्नादरूपो महेश्वर ॥
यदुक्त ब्रह्मण स्थान ब्रह्मग्रन्थिश्च य स्मृत ।
तन्मध्ये सस्थित प्राण प्राणाद्वह्निसमुद्भव [1] ॥
वह्निमारुतसयोगान्नाद समुपजायते ।
नादादुत्पद्यते बिन्दुस्तत सर्व[2] च वाङ्मयम् ॥' इति ।

नादद्वैविध्य कथयति—**आहत** इति । द्विविधो ऽपि नाद पिण्डे प्रकाशते प्रकटीभवति ॥ १—२ ॥

(क०) तच्च शरीर जीवकर्मायत्तम् । स च जीवो जिज्ञास्यमान स्वांशि ब्रह्मापेक्षत इति तस्मिञ्जिज्ञासिते तत्स्वरूप निरूपयति—**अस्ति ब्रह्मेति** । चिदान द ज्ञानसुखस्वरूपम् । स्वयज्योति स्वय प्रकाशमानम् । निरञ्जन निर्लेपम् । ईश्वर स्वतन्त्रम् । प्रपञ्चलयनाल्लिङ्गम् । अद्वितीय स्वसदृशवस्त्वन्तररहितम् । अज जन्मरहितम् । विभु व्यापकम् । निर्वि-कारम्, जायते ऽस्ति वर्धते विपरिणमते ऽपक्षीयते विनश्यतीति षड् भाव-

[1] ०समुद्गम
[2] ०र्नादात्सर्व

अनाद्यविद्योपहिता यथा ऽग्नेर्विस्फुलिङ्गका ।
दार्वाद्युपाधिसभिन्नास्ते कर्मभिरनादिभिः ॥ ६ ॥

विकारा, तै रहितम् । निराकारमाकारशून्यम् । सर्वेश्वर सकलजगत्कर्तृ । अनश्वर नाशरहितम् । सर्वशक्ति इच्छाज्ञानक्रियाभोगशक्तियुक्तम् । सर्वज्ञम् अतीतानागतवर्तमानसकलपदार्थवेदितृ । इत्युपनिषदुक्त ब्रह्मास्ति । ब्रह्मस्वरूपमुक्त्वा तत्तादात्म्येन जीवास्तेषा देहसबन्ध च निरूपयति- -तदशा इति । तस्य ब्रह्मणो ऽशा मात्रा ॥ ४, ५ ॥

(सु०) इति देहाभिधान प्रतिज्ञाय तन्मूलकारण कथयति—अस्तीति । सवदा सर्वत्रापि सत्, नित्य व्यापक चेत्यर्थ । ब्रह्म बृहत्त्वाद् बृहणत्वाद्वा । चिद्विज्ञानरूपम्, आनन्द सुखस्वरूपम्, 'विज्ञानमानन्द ब्रह्म' इति श्रुते । स्वयज्योति स्वप्रकाशम्, 'तमेव भान्तमनु भाति विश्व तस्य भासा सर्वमिद विभाति' इति श्रुते । निरञ्जनमविद्यालेपशून्यम्, अविद्याया जीवाश्रयत्वात् । ब्रह्माश्रयाविद्यापक्षे ऽपि स्वाश्रयाव्यामोहकत्व निरञ्जनपदेनोच्यते । ईश्वर कर्तुमकर्तुमन्यथा कर्तु वा शक्तम् । लिङ्ग कारणम् । अद्वितीय सजातीयविजातीयस्वगतभेदशून्यम् । अजमकारणकम् । विभु व्यापक समर्थ वा । निर्विकार जायते ऽस्ति वर्धते विपरिणमते ऽपक्षीयते विनश्यतीति यास्कोदितसर्वविकारशून्यम् । निराकार मूर्त्यनवच्छिन्नम् । सर्वेश्वर सर्वेषा ब्रह्मादीनामपि शासकम् । अनश्वरमविनाशि । सर्वशक्ति सर्वा सर्वस्य प्रपञ्चस्य कारण या सा शक्तिर्माया- ऽऽख्या विद्यते ऽस्मिन्निति । सर्वज्ञ सर्वविषयसाक्षात्कारवत् । तदशास्तदभिन्ना, यथा ऽग्नेर्विस्फुलिङ्गा अग्नित्वेनाग्नेरभिन्ना, अथ वा 'अशो नानाव्यपदेशात्' इति सूत्रोक्तत्वाज्जीवपरमात्मनोरशाशित्वपक्षमेव स्वीकृत्योक्तम् ॥ ४—५ ॥

(क०) अनाद्यविद्योपहिता । अनाद्यविद्या मूलाविद्या, अधिष्ठानस्य याथाऽऽत्म्याज्ञानमिति यावत् । तया ऽविद्ययोपहिता अवच्छिन्ना जीवसज्ञका भवन्ति । सच्चिदानन्दविभुस्वभावस्य वस्तुनो ऽविद्योपाधिव-

सुखदु:खप्रदै: पुण्यपापरूपैर्नियन्त्रिता ।
तत्तज्जातियुत देहमायुर्भोग च कर्मजम् ॥ ७ ॥
प्रतिजन्म प्रपद्यन्ते तेषामस्त्यपर पुन: ।
सूक्ष्म लिङ्गशरीर तदा मोक्षादक्षय मतम् ॥ ८ ॥
सूक्ष्मभूतेन्द्रियप्राणावस्थाऽऽत्मकमिद विदु ।
जीवानामुपभोगाय जगदेतत्सृजत्यज. ॥ ९ ॥
स आत्मा परमात्मा च विश्रान्त्यै सहरत्यथ ।
तदेतत्सृष्टिसहार प्रवाहानादि समतम् ॥ १० ॥

शादसत्त्वासर्वज्ञत्वदु खित्वपरिच्छिन्नत्वादिधर्मारोपे जीवव्यपदेश आविद्यिक इत्यर्थ । तत्र दृष्टान्तमाह—**यथा ऽग्नेरिति** । अशा इति शेष । तेजोरूपस्याग्नेरशा दारुतृण[1]मण्याद्युपाध्यवच्छिन्ना यथा स्फुलिङ्गा इति व्यपदिश्यन्ते तद्वदिति । **ते कर्मभिरिति** । ते जीवा । क्रमेण सुखदु खप्रदै पुण्यपापरूपै कर्मभि । पुण्यकर्मणा सुखप्रदत्व तावत् 'एष उ एव साधु कर्म कारयति त यमेभ्यो लोकेभ्य उन्निनीषते' इति श्रुते । पापकर्मणा दु खप्रदत्व च 'एष उ एवासाधु कर्म कारयति त यमधो निनीषते' इति श्रुते । **अनादिभिरिति** । कर्तृत्वाद्यभिमानिन आत्मनो जीवत्वोपाधेरविद्याया अनादित्वाज्जीवकर्तृकाणा कर्मणामपि 'तदाकृत्युपरक्ताना व्यक्तीनामेकयोनिता' इत्यादिन्यायेन प्रवाहरूपविवक्षया ऽनादित्वम् । नियन्त्रिता बद्धा सन्त । तत्तज्जातियुत मनुष्यत्वादिजातियुक्त देहमायु कर्मज भोग च प्रतिजन्म जन्मनि जन्मनि प्रपद्यन्ते प्राप्नुवन्ति । कर्मभिर्नियन्त्रिता इत्यनेनैव जीवाना देहादिप्राप्तौ देहादीनामप्यविशेषेण कर्मजत्वे सिद्धे,

[1] ०तृणपर्णा०

भोगस्य पुन कर्मजमिति विशेषणमिह जन्मनि क्रियमाणानि दृष्टफलकानि कृष्यादिकर्माणि प्रति जीवाना कर्तृत्वमपि नियतमेवेति वक्तुम् । **तेषा-मस्तीति** । तेषा स्थूलशरीरावच्छिन्नाना जीवानाम् अपर स्थूलशरीरादन्य त्सूक्ष्ममव्यक्त लिङ्गशरीरमस्ति, 'अङ्गुष्ठमात्र पुरुष' इत्यादिश्रुते सिद्ध मित्यर्थ । तच्च आ मोक्षाच्चरमस्वरूपसाक्षात्कारपर्यन्तम् अक्षय स्वाविद्या वासनाऽनुच्छेदादविनाशि मत शास्त्रसिद्धम् । इद च लिङ्गशरीर सूक्ष्म-भूतेन्द्रियप्राणावस्थाऽऽत्मकम्, भूतानि पृथिव्यादीनि, इन्द्रियाणि चक्षुरा-दीनि, प्राणा प्राणादय पञ्च वायव, सूक्ष्माणामव्यक्तरूपाणामेतेषा मन्तरिन्द्रियेण मनसा सघातत्वेनावस्था ऽवस्थानमात्मा स्वरूप यस्य तत्तथोक्तम् । केचित् 'न कदाचिदनीदृश जगत्' इति जगत एव प्रवाहरूपेण नित्यत्वमङ्गीकुर्वन्ति, तन्मतनिरासार्थं जगत्सृष्टिसहारयो सप्रयोजनमात्मकर्तृकत्वमाह—जीवानामिति । जीवानामुक्तदेहद्वयाभिमा-निनामुपभोगाय सुखदु खानुभवाय जगद्भूतभौतिकात्मकम् । अज परमा-त्मा । स आत्मेत्यन्वय । परत्वमप्यात्मनो निकृष्टजीवापेक्षयश्वरत्वमापन्न मित्यर्थ । स आत्मेति पूर्वोक्त ब्रह्म परामृश्यते । चकारो भिन्नक्रम । सहरति चेत्यन्वय । अथ सृष्टस्य जगत स्थित्यनन्तरम् । विश्रान्त्यै, जीवानामित्यनुषञ्जनीयम्, सृष्टिसहारयोरुक्तरीत्या जीवार्थत्वात् । जीवाना-दित्वद्योतनाय तयो प्रवाहानादित्वमाह—**तदेतदिति** । सृष्टिश्च सहारश्च सृष्टिसहारमिति द्वन्द्वैकवद्भावे नपुसकत्वम् । प्रवाहानादीति । व्यक्तिविवक्षया सादित्व सतानरूपेणानादित्वमित्यर्थ ॥ ६—१० ॥

(सु०) ननु विषमो दृष्टान्त, स्फुलिङ्गाना स्थूलत्वसूक्ष्मत्वादिविरुद्धधर्म-ससर्गेण भिन्नत्वात्, अत आह—**दार्वादीति** । आदिशब्देनाबिन्धनस्य वैद्युत-स्याग्नेरुदकोपाधिग्रहणम् । अतश्चौपाधिक स्फुलिङ्गादौ भेदो न तात्त्विक इत्यर्थ । तेषा जीवाना कर्मनिबद्धत्व कथयति—**ते कर्मभिरिति** । ननु ब्रह्मा-

**ते जीवा नात्मनो भिन्ना भिन्न वा नात्मनो जगत्[1] ।**
**शक्त्या सृजन्नभिन्नो ऽसौ सुवर्ण कुण्डलादिव ॥ ११ ॥**
**सृजत्यविद्ययेत्यन्ये यथा रज्जुर्भुजगमम् ।**

भिन्नाना जीवाना कथ कर्मबन्ध इत्यत आह—**अनादिभिरि**ति । ते जीवा प्रतिजन्म तत्तज्जातियुत मनुष्यत्वगोत्वादिजातियुक्त देहमायुरुपभोग च कर्मव्यापारज तत्तज्जात्यनुरूप प्रपद्यन्ते । ननु जीवाना स्थूलदेहनिबद्धत्वे कथमनेकजन्मप्राप्ति स्थूलदेहस्य विनाशोपलब्धेरित्यत्राह—**तेषामस्त्यपर**मिति । आ मोक्षात्, मोक्ष मर्यादीकृत्य । किंविव लिङ्गशरीरमित्यपेक्षायामाह—**सूक्ष्मे**ति । पञ्च तन्मात्राणि, एकादशेन्द्रियाणि, एव षोडशकलमित्यर्थ । ननु परमेश्वरस्य जगत सृष्टिसहारयो कि प्रयोजनम् ? अत आह—**जीवाना**मिति । अनादित्वाच्च तयोर्नाय पर्यनुयोग इत्याह—**तदेत**दिति । सृष्टिसहारयो समाहार सृष्टिसहार प्रवाहानादित्वेन समतम् ॥ ९—१० ॥

(क०) अशाशिभावेनात्मनो जीवाना चाभेदमभिदधत्कार्यकारणभावेनात्मनो जगतश्चाभेद भेदाभेदमतानुसारेण सदृष्टान्तमाह—**ते जीवा** इति । असावात्मा शक्त्या स्वगतक्रियाशक्त्या जगत्सृजस्तस्मादभिन्न । विभक्तिविपरिणामेन जगत्पदस्यानुषङ्ग कर्तव्य । यथा सुवर्णकुण्डलयोस्तादात्म्य तद्वदित्यर्थ । यथा ऽऽहु —

'कार्यरूपेण नानात्वमभेद कारणात्मना ।
हेमात्मना यथा ऽभेद कुण्डलाद्यात्मना भिदा ॥' इति ।

मुख्यवेदान्तिमतमवलम्ब्याह—**सृजती**ति । अन्ये वेदान्तिन । अविद्यया ऽधिष्ठानाज्ञानेन । तत्र दृष्टान्त —यथा रज्जुर्भुजगममिति । एतेन प्रपञ्चस्यातत्त्वतो ऽन्यथाभावाद् ब्रह्मविवर्तत्व दर्शितम् ॥ ११, ११- ॥

[1] 'तेजोवदात्मनो भिन्नाभिन्नया वा ऽऽत्मनो जगत् ।'

**आत्मन पूर्वमाकाशस्ततो वायुस्ततो ऽनल. ॥ १२ ॥**
**अनलाज्जलमेतस्मात्पृथिवी समजायत ।**
**महाभूतान्यमून्येषा विराजो ब्रह्मणस्तनु ॥ १३ ॥**

(सु०) स परमेश्वरो जगतो भिन्नो ऽभिन्नो वेत्यपेक्षायामाह—**तेजोवदिति**। आत्मन शक्त्या जगत्सृजन्भिन्नो न भवति। असौ परमेश्वर । कथभूतया शक्त्या? तेजोवत् आत्मनो भिन्नाभिन्नया। यथा तेज सूर्याद्भिन्नमित्युच्यते 'सूर्यस्य तेज' इति, अभिन्नमपि व्यपदिश्यते 'सूर्यस्तेज' इति। दृष्टान्तान्तरमाह—**सुवर्णमिति**। कुण्डलात्सुवर्णत्वेनाभिन्न सुवर्ण कुण्डलत्वेन च भिन्नम्। वेदान्तिना मतेन प्रपञ्चस्याविधिकत्व कथयति—**सृजतीति**। यथा रज्जु स्वाज्ञानात् 'भुजगो ऽयम्' इति कल्पित भुजग सृजति, तथा परमेश्वरो ऽप्यधिष्ठानभूतस्य स्वस्याज्ञानाद्वियदादिप्रपञ्चमित्यर्थ ॥ ११, ११- ॥

(क०) भूतादिसृष्टिक्रमेण भौतिक पिण्ड सप्रभेद निरूपयति—**आत्मन पूर्वमित्यादिना**। आत्मन कारणभूतात्, पूर्वं वाय्वादिभ्य प्रथमम्, आकाश उत्पन्न इत्यर्थ । तत इति तच्छब्देनाकाश परामृश्यते। तस्मादाकाशात्कारणभूताद्वायुरुत्पन्न इत्यर्थ । ततो ऽनल इत्यत्रापि वायोरनल समजायतेत्यर्थ । तथा च श्रुति 'आत्मन आकाश सभूत, आकाशाद्वायु' इत्यादि । अमून्याकाशादीनि महाभूतानि। विराजो ब्रह्मणो महाभूतोपहितस्य ब्रह्मण एषा तनुरिति सबन्ध । एषेति पुरोवर्तितया निर्देशो भूतसघातस्य सकललोकप्रत्यक्षत्वेन। विराज इति आत्मा महाभूतानि सृष्ट्वा तान्यनुप्रविश्य तदभिमानित्वेन विराडित्युच्यते, तस्य। अमून्येषा तनुरिति 'उद्दिश्यमानप्रतिनिर्दिश्यमानयोरैक्य प्रतिपादयन्ति सर्वनामानि पर्यायेण तत्तल्लिङ्गभाञ्जि भवन्ति' इति भिन्नलिङ्गतोपपत्ति ॥ -१२, १३ ॥

**ब्रह्म ब्रह्माणमसृजत्तस्मै वेदान्प्रदाय च ।**
**भौतिक वेदशब्देभ्य सर्जयामास तेन तत् ॥ १४ ॥**
**तदाज्ञया ऽसृजद् ब्रह्मा मनसैव प्रजापतीन् ।**
**तेभ्यस्तु रैतसी सृष्टि शरीराणा निरूप्यते ॥ १५ ॥**
**स्वेदोद्भेदजराय्वण्डहेतुभेदाच्चतुर्विधम् ।**
**देह यूकाऽऽदिन स्वेदादुद्भेदात्तु लताऽऽदिन ॥ १६ ॥**
**जरायोर्मानुषादीनामण्डात्त विहगादिन ।**

(सु०) सृष्टिक्रम कथयति—आत्मन इति । पञ्चमहाभूतात्मिका विराड् ब्रह्मणस्तनुरित्याह—महाभूतानीति ॥ -१२, १३ ॥

(क०) **ब्रह्म ब्रह्माण**मिति । ब्रह्म विराड्रूप ब्रह्माण चतुर्मुखमसृजत् । पुनस्तद्ब्रह्म तस्मै चतुर्मुखाय वेदान् ऋग्वेदादीन्प्रदाय तेन प्रयोज्येन कर्त्रा स्वय प्रयोजकम्, वेदशब्देभ्य, वेद्येते अनेन धर्माधर्माविति वेद, तस्मिन्शब्दा आकृत्यादिवाचका, तेभ्य कल्पान्तरातीतपदार्थस्मारकत्वेन निमित्तभूतेभ्य, भौतिक पञ्चीकृतपञ्चमहाभूतात्मक देहेन्द्रियादि सर्जयामास भौतिकस्य सृष्टि कारितवदित्यर्थ ॥ १४ ॥

(सु०) ननु हिरण्यगर्भ एव जगत कर्तेति लोकप्रसिद्धि, कथमीश्वर कर्तेत्युच्यते? अत आह—ब्रह्मेति । ब्रह्मेश्वरो ब्रह्माण हिरण्यगर्भमसृजत्, तस्मै च वेदान्प्रदाय भौतिक प्रपञ्च सर्जयामास सृजन्त ब्रह्माण प्रेरयामास । वेदशब्देभ्य इति ल्यब्लोपे पञ्चमी । ततश्च वेदशब्दान्स्मारयित्वा ऽसर्जयत्, 'यो ब्रह्माण विदधाति पूर्व यो वै वेदाश्च प्रहिणोति तस्मै' इति श्रुते । ततश्च कर्तृत्व हिरण्यगर्भस्य, प्रयोजककर्तृत्व परमेश्वरस्येत्यर्थ ॥ १४ ॥

(क०) साक्षात्कर्तुश्चतुर्मुखाद्भौतिकसृष्टे क्रममाह—**तदाज्ञये**ति । तस्य विराज आज्ञया । तेभ्य प्रजापतिभ्यो रैतसी रेतोविकाररूपा ।

**तत्र नादोपयोगित्वान्मानुष देहमुच्यते ॥ १७ ॥**
**क्षेत्रज्ञ स्थित आकाश आकाशाद्वायुमागतः ।**
**वायोर्धूम ततश्चाभ्रमभ्रान्मेघे ऽवतिष्ठते ॥ १८ ॥**

रेत शब्देन शोणितमप्युपलक्ष्यते । स्वेदोद्भेदेति । स्पष्टो ऽर्थ । यूकाऽऽदिन इत्यादौ यूका ऽऽदिर्यस्यति तद्गुणसविज्ञानो बहुव्रीहि ॥ १५—१६- ॥

(सु०) ब्रह्मा किमसृजदित्यपेक्षायामाह—तदाज्ञयेति । प्रजापतीन् दक्षादीन् । तेभ्य किमुत्पन्नमित्यपेक्षायामाह—तेभ्यस्त्विति । रेतस समुत्पन्ना रैतसी । शरीराणा चातुर्विध्य कथयति—स्वेदोद्भेदेति । कि कस्मादुत्पन्न मित्यपेक्षायामाह—**यूकाऽऽदिन** इति ॥ १५, १६- ॥

(क०) उक्तचतुर्विधदेहमध्ये त्रिविधेषु यूकाऽऽदिदेहेषु लताऽऽदेर-चेतनत्वात्, यूकाऽऽदेरतिसूक्ष्मत्वात्, विहगादे सपूर्णधातुनाड्याद्यभावात्, जरायुजेष्वपि पश्वादिदेहस्य धातुनाड्यादिसपूर्णतासद्भावे ऽपि तिर्यक्त्वेनो-च्चारणाशक्तेश्च, पारिशेष्यान्मानुष देहमेव नादोपयोगि, ततस्तस्यैवोत्पत्तिर्नि रूप्यत इत्याह—**तत्रेति** ॥ १७ ॥

(सु०) तेषु देहेषु मानुषदेहस्यैव विशेषतो निरूपणे कारणमाह—**तत्रेति** ॥ -१७ ॥

(क०) तस्य मानुषशरीरस्य रैतस्या सृष्टौ जीवस्याकाशादिपर-परया गर्भसक्रमणमाह—**क्षेत्रज्ञ** इत्यादिना **गर्भाशयगत भवेदित्यन्तेन** । क्षेत्र शरीरम्, तज्जानाति अहमिति वा ममेदमिति वा वेत्तीति क्षेत्रज्ञो जीव, यदुक्त भगवता—

'इद शरीर कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति त प्राहु क्षेत्रज्ञ इति तद्विद ॥'

आहुत्या ऽऽप्यायितो ग्रस्तरसो ग्रीष्मे च भानुभि ।
भानुर्मेघे घनरस निधत्ते त बलाहक ॥ १९ ॥
यदा वर्षति वर्षेण सह जीवस्तदा भुव ।
वनस्पत्योषधीर्जाताः सक्रामत्यविलक्षितः ॥ २० ॥
ताभ्यो ऽन्न जातमन्न तत्पुरुषै शुक्रता गतम् ।
शुद्धार्तवाया योषाया निषिक्त स्मरमन्दिरे ॥ २१ ॥
सहार्तवेन शुद्ध चेद्गर्भाशयगत भवेत् ।

इति । धूमज्योतिर्मरुता सघातो ऽभ्रम्, जलवत्तदेव मेघ । आहुत्येति । यजमानैर्मन्त्रपूर्वक देवतोद्देशेनाग्नौ प्रक्षिप्यमाण समिदन्नाज्यादि द्रव्यमाहुति, तया ऽऽप्यायित सतर्पित, ग्रीष्मे भानुभि किरणैर्ग्रस्तरसो भूमेरात्तसारो भानु सूर्य । घनरस जलम् । भुवो जाता वनस्पत्योषधीरित्यन्वय । अचाक्षुषत्वादविलक्षित । ताभ्य ओषधीभ्य । अन्नम्, अद्यत इत्यन्नमोदनादि । पुरुषैरन्न भुक्त तदोदनादि । शुद्धार्तवाया, आर्तव शोणितम् 'लाक्षारसशशास्राभ धौत यच्च विरज्यते' इत्युक्तलक्षणम्, शुद्धमार्तव यस्यास्तस्या । शुद्ध चेदिति । शुक्रमपि 'शक्त शुक्र गुरु स्निग्ध मधुर बहुल बहु । घृतमाक्षिकतैलाभ सद् गर्भाय' इत्युपक्रम्य 'शुद्ध शुद्धार्तवम्' इत्युक्तत्वाच्छुद्धम् । जीवकर्मेति । तच्च शुक्रमाशयगतत्वमात्रेण गर्भ नारभते, किं तु जीवकर्मप्रेरित जीवस्योत्पत्स्यमानदेहाभिमानिन कर्मभि प्रारब्धकर्मभि प्रेरित देहभावानुकूलक्रियया योजित सदेव गर्भमारभते। अत्र गर्भशब्देन देहोपादानमाशय गत शुक्रशोणितसघात उच्यते ॥१८—२२॥

(सु०) उत्पत्तिप्रकार कथयति—क्षेत्रज्ञ इति । क्षेत्रज्ञ आत्मा । अभ्रमित्यवर्षुक मेघशकलमुच्यते, मेघ इति वर्षुको मेघ । ननु मेघे कथमुदकप्राप्तिरित्यत

जीवकर्मप्रेरित तद् गर्भमारभते तदा ॥ २२ ॥
द्रवत्व प्रथमे मासि कललाख्य प्रजायते ।
द्वितीये तु घन पिण्ड [1]पेशीषद्घनमर्बुदम् ॥ २३ ॥
पुस्त्रीनपुसकाना स्युः प्रागवस्थाः क्रमादिमाः ।
तृतीये त्वङ्कुरा पञ्च कराङ्घ्रिशिरसो मताः ॥ २४ ॥

आह—आहुत्येति । आहुत्या यागादौ विहितया ऽऽप्यायितस्तर्पित , सतुष्ट इति यावत्, भानुभि किरणैर्ग्रस्तरस स्वीकृतोदको भानु सूर्यो मेघे घनरसमुदक निधत्ते । मेघवृष्टेनोदकेन सह जीवस्यौषध्यादिप्रवेशमाह—त बलाहक इति । जीवस्यौषधीभ्यो ऽन्नशुक्रादिद्वारा गर्भप्रवेशमाह—ताभ्य इति ॥ १८—२२ ॥

(क०) एवमुक्तप्रकारेणाशयगतस्य गर्भस्य प्रथममासत आरभ्य नवममासपर्यन्त प्रतिमासमवस्थाभेदान्दर्शयति—द्रवत्वमित्यादिना । कल लाख्य कललमित्याख्या यस्य तत्तथोक्तम् । कललमित्यगृहीतकाठिन्यस्य शुक्रशोणितसघातस्य द्रवीभाव उच्यते । द्वितीये त्विति । घन पिण्डो जनिष्यमाणस्य पुस प्रागवस्था, पेशी जनिष्यमाणाया स्त्रिया प्रागवस्था, ईषद्घनमर्बुद जनिष्यमाणस्य नपुसकस्य प्रागवस्था, इति क्रम । घन काठिन्ययुक्त , पेशी चतुरश्रा मासप्राया, ईषद्घन घनपेश्युभयसाधारण त्वात्तथोक्तम् , अर्बुद शाल्मलीमुकुलाकारम् , यथा ऽऽहु —

‘ चतुरश्रा स्मृता पेशी वृत्त पिण्डो घन स्मृत ।
शाल्मलीमुकुलाकारमर्बुद भिषजो विदु ॥ ’ इति ।

तृतीये त्विति । पूर्वोक्तघनपिण्डादे , कराङ्घ्रिशिरस , करौ चाङ्घ्री च शिरश्च कराङ्घ्रिशिर , प्राण्यङ्गत्वाद् द्वन्द्वैकवद्भाव , तस्य कराङ्घ्रिशिरस ।

[1] पेशी च घन०

**अङ्गप्रत्यङ्गभागाश्च सूक्ष्माः स्युर्युगपत्तदा ।**
**विहाय श्मश्रुदन्तादीञ्जन्मानन्तरसभवान्[1] ॥ २५ ॥**
**एषा प्रकृतिरन्या तु विकृतिः समता सताम् ।**
**चतुर्थे व्यक्तता तेषा [2]भावानामपि जायते ॥ २६ ॥**
**पुसा शौर्यादयो भावा भीरुत्वाद्यास्तु योषिताम् ।**
**नपुसकाना सकीर्णा भवन्तीति प्रचक्षते ॥ २७ ॥**

अड्कुरा इति । अड्कुरा जायमाना एव कराड्घ्रिशिरो भवन्तीति भाव्य वयवविवक्षया ऽय व्यपदेश सूत्रशाटकन्यायेन । युगपदड्कुरावस्थायामेव । अङ्गप्रत्यङ्गभागा इति । शिरोऽड्कुरे ग्रीवानयननासिकाकर्णादिभागा, कराड्कुरयोरसकूर्परमणिबन्धाड्गुल्यादिभागा, अड्घ्र्यड्कुरयोरूरुजानु जङ्घागुल्फाड्गुल्यादिभागा । सूक्ष्मा अव्यक्तरूपा ॥ **एषा प्रकृतिरिति** । जन्मानन्तरसभवाञ्श्मश्रुदन्तादीन्विहायाड्कुराद्यवस्थायामेव सूक्ष्मरूपाङ्गप्रत्य ङ्गभागोत्पत्ति प्रकृति, जरायुजाना साधारण स्वभाव इति यावत् । **अन्या तु विकृतिरिति** । अन्या जन्मानन्तरभाविना श्मश्रुदन्तादीनामङ्गा दिसमानकालमेवोत्पत्तिरङ्गादिषु केषाचिदनुत्पत्ति स्थानव्यत्यासेनोत्पत्तिरङगु ल्यादिसख्याया न्यूनाधिकभावश्च । **चतुर्थ** इति । तेषामङ्गप्रत्यङ्गभागाना व्यक्तता ऽभिव्यक्तता पृथगात्मता । भावानामपि शौर्यादीनामात्मधर्माणा लीनाना व्यक्तता ॥ २३—२७ ॥

(सु०) प्रतिमास गर्भस्यावस्थाविशेषमाह—द्रवत्वमिति । पुस्त्रीनपुसकाना क्रमात्प्रागवस्था आह—द्वितीय इति । पिण्डस्य पेशीसाम्य पुरुषावस्था, कठिनत्व स्त्र्यवस्था, अर्बुदत्वमकठिनत्व नपुसकावस्था ॥ श्मश्रुदन्तादीत्यादिशब्देन

[1] श्मश्रुदन्तादि जन्मानन्तरसभवात्

[2] भावानामुपजायते

मातृज चास्य हृदय विषयानभिकाङ्क्षति ।
अतो मातुर्मनोऽभीष्ट कुर्याद्गर्भसमृद्धये ॥ २८ ॥
ता च द्विहृदया नारीमाहुर्दौहृदिनी बुधाः ।
अदानाद्दोहदाना स्युर्गर्भस्य व्यङ्गताऽऽदयः ॥ २९ ॥
मातुर्यद्विषयालाभस्तदार्तो जायते सुतः ।
गर्भः स्यादर्थवान्भोगी दोहदाद्राजदर्शने ॥ ३० ॥
अलकारेषु ललितो धर्मिष्ठस्तापसाश्रमे ।
देवतादर्शने भक्तो हिस्रो भुजगदर्शने ॥ ३१ ॥
गोधाऽशने तु निद्रालुर्बली गोमासभक्षणे ।
माहिषे शुकरक्ताक्ष लोमश सूयते सुतम् ॥ ३२ ॥

स्त्रीणा स्तनादि ज्ञातव्यम्, जन्मानन्तरसभवादिति हेतूक्ते ॥ चतुर्थ भावा प्रकटीभवन्तीत्युक्तम्, तानेव भावान्विभज्य कथयति—पुसामिति ॥२३ – २७॥

(क०) मातृज चेति । अस्य गर्भस्य मातृज मातुर्जात हृदयम्, चकारान्मातुर्हृदय च, तदुभय यतो विषयानभिकाङ्क्षति, अत इति सबन्ध । अयमर्थ —मातृहृदयसबद्धस्य गर्भहृदयस्यैव विषयाभिलाषित्वात्तदा मातुरभीष्टमवश्य कर्तव्य गर्भसमृद्धिकामेनेति ॥ दौहृदिनीमिति । द्वयोर्हृदयो समाहारो द्विहृदयम्, तस्य भावो दौहृदमिति पृषोदरादित्वात्साधु , तत्सबन्धाद्गर्भो ऽपि दौहृदमित्युच्यते , तद्दौहृदमस्या अस्तीति दौहृदिनी, ताम् । तदभीष्टाकरणे दोषमाह—अदानादिति । दोहदानाम्, दोहद गर्भिणीमनोरथ , तद्विषया अपि दोहदानि, तेषाम् ॥ तत्तद्दोहदवशादुत्पत्स्यमानस्योत्कर्षापकर्षावाह—गर्भ स्यादित्यादिना । गर्भिण्या राजदर्शने

**प्रबुद्ध पञ्चमे चित्त मासशोणितपुष्टता ।**
**षष्ठे ऽस्थिस्नायुनखरकेशरोमविविक्तता ॥ ३३ ॥**
**बलवर्णौ चोपचितौ सप्तमे त्वङ्गपूर्णता ।**
**पाल्यन्तरितहस्ताभ्या श्रोत्ररन्ध्रे पिधाय स: ॥ ३४ ॥**
**उद्विग्नो गर्भसवासादास्ते गर्भाशयान्वित ।**
**स्मरन्पूर्वानुभूता: स नानाजातीश्च यातना ॥ ३५ ॥**

दोहदादभिलाषाद्गर्भ उत्पत्स्यमानो ऽर्थवान्भोगी च भवति । एवमुत्तरत्रापि द्रष्टव्यम् ॥ २८—३२ ॥

(सु०) **मातृजमिति** । मातृज मातृसबन्धि हृदयमस्याभीष्टान्विषयानभि काङ्क्षति । अथ वा, अस्य गर्भस्य मात्रवयवेषु निष्पन्न मातृज हृदयमिति सबन्ध कर्तव्य ॥ दौहृदिनीपद निर्वक्ति—ता चेति । दोहदादाने दोषमाह—अदानादिति । व्यङ्गता काणत्वान्धत्वपङ्गुत्वादि । आदिशब्देन दुर्बलत्व निरुत्साहत्वमित्यादि ज्ञातव्यम् ॥ दोहदविशेषेण गर्भे फलविशेषमाह—गर्भे स्यादिति ॥ माहिष इति । माहिषमासे दोहदिनी नारी शुकवद्रक्ताक्षमालोहितलोचन रोमश च सुतमपत्य सूते ॥ २८—३२ ॥

(क०) **पञ्चम** इति । प्रबुद्धम्, पूर्व लीनमन्त करण तदा स्पन्दो न्मुख भवति । **षष्ठ** इति । स्नायव सूक्ष्मसिरा, केशा शिरोजा, रोमाण्य ङ्गरुहाणि, बलवर्णौ, बल सत्त्वम्, वर्णो गौरताऽऽदि । **सप्तमे त्विति** । पाल्यन्तरितहस्ताभ्याम् । पालिरूरु, 'पालि स्त्र्यश्रचङ्कपङ्क्तिषु' इत्यभि धानात्, पालिभ्यामूरुभ्यामन्तरितावाच्छादितौ हस्तौ, ताभ्याम् । श्रोत्र रन्ध्रे पिधायेत्यनेनाधोमुखतया सकुचद्गात्रत्वमुक्तम् ॥ उद्विग्नो भीत । गर्भाशयान्वितो जरायुग्रस्तदेह । अभ्यासतत्पर इति । अभ्यासो नामात्र

मोक्षोपायमभिध्यायन्वर्तते ऽभ्यासतत्पर: ।
अष्टमे त्वक्स्मृती[1] स्यातामोजश्चैतच्च हृद्भवम् ॥ ३६ ॥
शुद्धमापीतरक्त च निमित्त जीविते मतम् ।
पुनरम्बा पुनर्गर्भ चञ्चल तत्प्रधावति ॥ ३७ ॥
अतो जातो ऽष्टमे मासि न जीवत्योजसोज्झित ।
किंचित्कालमवस्थान सस्कारात्खण्डिताङ्गवत् ॥ ३८ ॥
समय: प्रसवस्य स्यान्मासेषु नवमादिषु ।
मातू रसवहा नाडीमनुबद्धा पराऽभिधा ॥ ३९ ॥

ससारजिहासया पौन पुन्येनात्मचिन्तनम् ॥ **अष्टम** इति । त्वक्स्मृती स्यातामिति । यद्यपि त्वक्स्मृती सप्तमे ऽपि स्त , तथा ऽप्यत्र त्वच सान्द्रत्व स्मृतेश्च विकल्पविषयत्व भवतीत्यर्थ । ओजश्च स्यादित्यूह । ओज शुक्रसार । एतदोजश्च हृद्भव हृन्निवास शुद्ध दुष्टवाताद्यनुपहतम् आपीतरक्तमीषत्पीतरक्तवर्ण जीविते प्राणधारणे निमित्त कारण मतमित्यन्वयार्थ । तदोजश्चञ्चलमेकत्रानवस्थित सदम्बा गर्भ च मुहुर्धावति । तदुक्त वाग्भटाचार्येण— 'ओजो ऽष्टमे सचरति मातापुत्रौ मुहु क्रमात्' इति । यतो ऽष्टमे ऽनवस्थितमोजो ऽत इत्यर्थ । अतो ऽष्टमे मासि जातो न जीवतीति न माससाकल्यार्थ , अपि तु यदौजो गर्भ विहायाम्बा सक्रामेत्तदा जात ओजसोज्झितत्वान्न जीवतीत्यर्थ । यदा पुनरोजो ऽम्बा विहाय गर्भ सक्रामेत्तदा तु प्रसवे ऽम्बा न जीवति , यदा पुनरोजस प्रधावनसमय एव प्रसवस्तदा तस्यैकत्राप्यनवस्थानादुभावपि न जीवत इति भाव । ननु लोके क्वचिदोजसोज्झितस्यापि गर्भस्य जन्मानन्तर किंचित्काल जीवतो ऽवस्थान दृश्यते, तत्कथमजीवनमित्याशङ्कय सदृष्टान्तमुपपत्तिमाह—**किंचित्कालमिति** । सस्कारादोज सचारसस्कारात् । खण्डिताङ्गवत्, खण्डित च

[1] त्वक्श्रुती

**नाभिस्थनाडी गर्भस्य मात्राहाररसावहा ।**
**कृताञ्जलिर्ललाटेऽसौ मातृपृष्ठमभि स्थितः ॥ ४० ॥**
**अध्यास्ते सङ्कुचद्गात्रो गर्भे दक्षिणपार्श्वग ।**
**वामपार्श्वस्थिता नारी क्लीब मध्यस्थित मतम् ॥ ४१ ॥**
**क्रियतेऽधःशिराः सूतिमारुतैः प्रबलैस्ततः ।**
**निःसार्यते रुजद्गात्रो यन्त्रच्छिद्रेण बालक' ॥ ४२ ॥**
**जातमात्रस्य तस्याथ प्रवृत्तिः स्तन्यगोचरा ।**
**प्राग्जन्मबोधसस्कारादिति जीवस्य नित्यता ॥ ४३ ॥**

तदङ्गमिति कर्मधारय । खण्डितमङ्ग यथोत्तरक्षणे प्राणसचारसस्काराच्चेष्टमान दृश्यते तद्वदित्यर्थ ॥ **नवमादिष्विति** । कचिन्नवमे मासे प्रसव स्यात्क चिद्दशमे कचिदेकादशे ऽपीति दर्शयितुमादिशब्दग्रहणम् ॥ ३३—४१ ॥

(सु०) पञ्चमे मासि चित्त प्रबुद्धम्, ज्ञानवान्भवतीत्यथ । विविक्तता पृथक्त्वे सति प्रकटत्वम् ॥ उपचितौ वृद्धि प्राप्तौ । **पाल्यन्तरितेति** । पाली कणपाली, तया ऽन्तरिताभ्या व्यवहिताभ्या पाणिभ्या श्रोत्ररन्ध्रे पिधाय । उद्विग्नो वैराग्यमापन्न । गर्भशयो गर्भे ध्यानातिशय आत्मानुसधानम्, तेनान्वित । यातना पीडा । मोक्षोपाय मोक्षसाधनमभिध्यायश्चिन्तयन् । अभ्यासतत्पर आत्मानुसधाननिष्ठ । अष्टममासावस्था कथयति—**अष्टम** इति । श्रुतिर्बहि स्थस्य शब्दस्याकर्णन न तु श्रवणेन्द्रियम्, तस्याकाशस्वरूपत्वा-न्नित्यत्वेनानुत्पत्ते । ओजो धातुविशेष ॥ शुद्धमकलुषम् । ओजो जीविते निमित्तमित्युक्तम्, तदेव विशदयति—**पुनरम्बामिति** ॥ गर्भस्य कथ पुष्टिरित्यत आह—**मातुरिति** । नाडीमनुबद्धा तद्विमिश्रा । मातृपृष्ठमभि लक्षीकृत्य । दक्षिण पार्श्वग इति पुलिङ्गनिर्देशात्पुमानिति गम्यते ॥ ३३—४१ ॥

(क०) सूतिमारुतैरपानाख्यमारुतै । यन्त्रच्छिद्रेण योनिरन्ध्रेण ॥ तस्य जातस्य ॥ **मृदव इति** । मृदवो मृदुत्वयुक्ता । **ह्लीहेति** । जीवा

भावा स्युः षड्विधास्तस्य मातृजा पितृजास्तथा ।
रसजा आत्मजाः सत्त्वसभवा सात्म्यजास्तथा ॥ ४४ ॥
मृदव शोणित मेदो मज्जा प्लीहा यकृद् गुदम् ।
हृन्नाभीत्येवमाद्यास्तु भावा मातृभवा मता॰ ॥ ४५ ॥
श्मश्रुलोमकचाः स्नायुसिराधमनयो नखा ।
दशना॰ शुक्रमित्याद्या स्थिरा पितृसमुद्भवाः ॥ ४६ ॥
शरीरोपचयो वर्णो वृद्धिः तृप्तिर्बल स्थितिः[1] ।
अलोलुपत्वमुत्साह इत्यादीन्रसजान्विदु ॥ ४७ ॥

धिष्ठानभूतवामपार्श्वस्थितमासविशेषवाचक प्लीहन्शब्द । यकृदिति दक्षिण-पार्श्वस्थितस्तादृशो मासविशेष । स्नायुसिराधमनय, स्नायव सूक्ष्मनाड्य, सिरास्ततो ऽपि स्थूला, धमनय एरण्डकाण्डवत्स्थूला । स्थिरा कठिना ॥ ४२—४६ ॥

(सु०) प्रसूतिप्रकार कथयति—क्रियत इति। सूतिमारुतै प्रसूति-साधनैर्वायुभि । रुजद्गात्र पीडितदेह । यन्त्रच्छिद्रेण, यन्त्राकारेण सूक्ष्मेण योनिरन्ध्रेणेत्यर्थ ॥ जातमात्रस्य स्तन्यपानादिप्रवृत्त्या जीवस्य नित्यत्व कथयति—जातमात्रस्येति ॥ भावभेदान्कथयति—भावा स्युरिति। रसो ऽन्नरस । सत्त्व-मन्त॰करणविशेष । सात्म्य चिरपरिचयसस्कारविशेष ॥ मातृजान्भावान्कथयति—मृदव इति। मृदवो मार्दवयुक्ता प्रदेशा । प्लीहा यकृच्च हृदयस्थितौ मासखण्डविशेषौ। हृच्च नाभिश्च हृन्नाभीति समाहारद्वद्व । 'द्वद्वश्च प्राणितूर्य-सेनाऽङ्गानाम्' इत्येकवद्भाव ॥ ४२—४६ ॥

(क०) शरीरोपचय इत्यादिर्ग्रन्थविस्तरकातरा इत्यन्तो ग्रन्थो निगदव्याख्यात ॥ ४७—७४ ॥

[1] धृति

इच्छा द्वेषः सुख दु ख धर्माधर्मौ च भावना ।
प्रयत्नो ज्ञानमायुश्चेन्द्रियाणीत्यात्मजा मता ॥ ४८ ॥
ज्ञानेन्द्रियाणि श्रवण स्पर्शन दर्शन तथा ।
रसन घ्राणमित्याहुः पञ्च तेषा तु गोचरा ॥ ४९ ॥
शब्दः स्पर्शस्तथा रूप रसो गन्ध इति क्रमात् ।
वाक्कराङ्घ्रिगुदोपस्थानाहु कर्मेन्द्रियाणि तु ॥ ५० ॥
वचनादानगमनविसर्गरतय क्रमात् ।
क्रियास्तेषा मनो बुद्धिरित्यन्त करणद्वयम् ॥ ५१ ॥
सुख दुःख च विषयौ विज्ञेयौ मनस क्रिया ।
स्मृतिभ्रान्तिविकल्पाद्या [1]धियो ऽध्यवसितिर्मता ॥ ५२ ॥
ब्रह्मयोनीनीन्द्रियाणि भौतिकान्यपरे जगुः ।
सत्त्वाख्यमन्तःकरण गुणभेदात्त्रिधा मतम् ॥ ५३ ॥

(सु०) रसजानात्मजाश्च कथयति—शरीरेति । उपचय पीनत्वम् । वृद्धि प्रमाणाधिक्यम् ॥ ४७, ४८ ॥ ज्ञानेन्द्रियाणि तद्विषयाश्च विभजते—ज्ञानेन्द्रियाणीति । स्पर्शन त्वगिन्द्रियम् । दर्शन चक्षु । रसन जिह्वा ॥ ४९ ॥ कर्मेन्द्रियाणि तद्व्यापाराश्च कथयति– वाक्करेति ॥ ५० ॥ वेदान्तिना मतमाश्रित्यान्त करणद्वय कथयति—मनो बुद्धिरिति । वाचस्पत्ये 'बुद्धिमनसोश्च करणयोरहमिति प्रख्यानप्रतिभासालम्बनत्व योग' इत्युक्तम् ॥ ५१ ॥ बुद्धिमनसोर्विवेकार्थ व्यापारविशेष कथयति—सुखमिति । ततश्च सुखदु खोपलब्धिसाधन मन, स्मृतिभ्रान्तिविकल्पादिसाधन बुद्धिरिति विवेक । व्यवसितिर्व्यापार ॥ ५२ ॥ मतभेदेनेन्द्रियकारण निरूपयति—ब्रह्मेति । वेदान्तिनस्तु ब्रह्मकारणकानीन्द्रियाणीत्याहु, सर्वस्यापि प्रपञ्चस्य ब्रह्मविवर्तत्वात् । अथ वा ब्रह्मयोनीन्यभौतिकानीति साख्या मन्यन्ते । अपरे वैशेषिका भौतिकानि

[1] धियो व्यवसिति०

सत्त्व रजस्तम इति गुणा सत्त्वात्तु सात्त्विकात् ।
आस्तिक्यशुद्धधर्मैकरुचिप्रभृतयो मता ॥ ५४ ॥
सत्त्वात्तु राजसाद्भावाः कामक्रोधमदादय ।
निद्राऽऽलस्यप्रमादार्तिवञ्चनाद्यास्तु तामसात् ॥ ५५ ॥
प्रसन्नेन्द्रियताऽऽरोग्यानालस्याद्यास्तु सात्म्यजाः ।
देहो भूतात्मकस्तस्मादादत्ते तद्गुणानिमान् ॥ ५६ ॥
शब्द श्रोत्र सुषिरता वैविक्त्य सूक्ष्मबोद्धृताम् ।
बिल च गगनाद्वायोः स्पर्श च स्पर्शनेन्द्रियम् ॥ ५७ ॥
उत्क्षेपणमवक्षेपाकुञ्चने गमन तथा ।
प्रसारणमितीमानि पञ्च कर्माणि रूक्षताम् ॥ ५८ ॥

पृथिव्यादिभूतोत्पन्नानीत्याहु । तृतीयमन्त करण कथयति - सत्त्वाख्यमिति । सत्त्वाख्य स्वभावाख्यमित्यथ । गुणभेदात्सत्त्वरजस्तमोभेदात् ॥ ५३ ॥ गुणान्विभज्य कथयति—सत्त्वमिति । सात्त्विकान्त करणकार्य कथयति - सत्त्वादिति । आस्तिक्यमस्ति परलोक इति श्रद्धा । शुद्धो निर्मलो यो धर्मस्तत्रैका रुचि प्रीति । प्रभृतिशब्देनाधर्मान्निवृत्तिरुच्यते ॥ ५४ ॥ राजसान्त करणकार्य कथयति—सत्त्वादिति । राजसाद्रजोगुणप्रधानात् सत्त्वात्सत्त्वाख्यादन्त - करणात् । तामसान्त करणकार्य कथयति—निद्रेति । निद्रा, इन्द्रियाणा बाह्यविषयव्यापारोपरम सुप्ति सुषुप्तिर्वा । आलस्यमिष्टसाधनेष्वपि व्यापारेष्वप्रवृत्ति । प्रमादो निरवधानत्वम् । वञ्चन प्रतारणम् ॥ ५५ ॥ सात्म्यजान्भावान्कथयति—प्रसन्नेति । आरोग्य नीरोगत्वम् । देहे भूतगुणान्विभजते—देह इति । भूतात्मक पञ्चमहाभूतारब्ध । यद्यपि देहस्यैककभूतारब्धत्वमेव, तथा ऽप्युपष्टम्भकत्वमन्येषा भूताना विद्यत एव ॥ ५६ ॥ सुषिरता सच्छिद्रत्वम् । वैविक्त्य विविक्तस्य भावो देहस्वभावप्रापकत्वेन पृथगवस्थानम् । सूक्ष्मबोद्धृता दुर्बोधस्याप्यर्थस्यानायासेन परिज्ञानम् । बिल स्थूल छिद्र सुषिर त्वल्पमिति विवेक । शरीरे वायुगुणान्कथयति—वायोरिति । स्पर्शो गुण । स्पर्शनेन्द्रिय त्वगिन्द्रि-

प्राणापानौ तथा व्यानसमानोदानसञ्ज्ञकान् ।
नाग कूर्म च कृकर देवदत्त धनजयम् ॥ ५९ ॥
दशेति वायुविकृतीस्तथा गृह्णाति लाघवम् ।
तेषा मुख्यतमः प्राणो नाभिकदादधः स्थित ॥ ६० ॥
चरत्यास्ये नासिकयोर्नाभौ हृदयपङ्कजे ।
शब्दोच्चारणनिःश्वासोच्छ्वासकासादिकारणम् ॥ ६१ ॥
अपानस्तु गुदे मेढ्रे कटीजङ्घोदरेषु च ।
नाभिकदे वङ्क्षणयोरूरुजानुनि तिष्ठति ॥ ६२ ॥
अस्य मूत्रपुरीषादिविसर्गः कर्म कीर्तित ।
व्यानो ऽक्षिश्रोत्रगुल्फेषु कट्या घ्राणे च तिष्ठति ॥ ६३ ॥
प्राणापानधृतित्यागग्रहणाद्यस्य कर्म च ।
समानो व्याप्य निखिल शरीर वह्निना सह ॥ ६४ ॥

यम् ॥ ५७ ॥ उत्क्षेपणमूर्ध्वाकाशदेशेन सह सयोगजनक कर्म। अवक्षेपो ऽधराकाशदेशेन सह सयोगजनक कर्म। आकुञ्चन स्वाभिमुखानयनम्। गमन दिग्विशेषानवच्छिन्नाकाशदेशसयोगजनक कम । प्रसारण परतो नयनम् । रूक्षता स्निग्धत्वाभाव ॥ ५८ ॥ प्राणापानादयो दश वायुविकारा । लाघव गुरुत्वाभाव । एतान्गुणान्वायोर्गृह्णाति शरीरमिति सबन्ध ॥ ५९, ५९- ॥ मुख्यस्य प्राणस्य स्थान व्यापार च कथयति—तेषामिति। मुख्यतम प्रधानभूत, अन्येषामपानादीना तदनुयायित्वात् । नाभिकदादध आधारप्रदेशे चरति विचरति ॥-६०, ६१ ॥ अपानस्य स्थान कर्म च कथयति— अपानस्त्विति। कटीजङ्घोदरेष्वित्यत्र पञ्चस्वित्यध्याहार्यम्, अन्यथा 'द्वद्वश्च प्राणितूर्यसेनाऽङ्गानाम्' इत्येकवद्भावप्राप्ते । सख्योपादाने तु नैकवद्भाव प्राप्नोति, 'कथ चेद्दश दन्तोष्ठा सख्यावाचीह भेदक' इति विचारचिन्तामणावुक्तत्वात् ॥ ६२ ॥ मूत्रपुरीषादीति । अत्रादिशब्देन वीर्यदूषिकाऽऽदिग्रहणम्। व्यानस्य स्थान कर्म च कथयति—व्यान इति ॥ ६३ ॥ प्राणापानयो पवनयोर्धृतिर्धारणम्, कुम्भनमिति यावत्। त्यागो

श्मश्रुकेशनख दन्तानस्थ्याद्यन्यच्च कर्कशम् ।
वातादिधातुप्रकृतिर्व्योमादिप्रकृतिस्तथा ॥ ७१ ॥
सप्तधा सात्त्विको यश्च ब्रह्मेन्द्रयमविग्रह ।
वारुणश्चाथ कौबेर आर्षो गान्धर्वविग्रहः ॥ ७२ ॥
राजसः षड्विधो यश्च पैशाचो राक्षसस्तथा ।
आसुरः शाकुनः सार्पः प्रेतदेहस्तथा पर ॥ ७३ ॥
तामसस्त्रिविधो यश्च पशुमत्स्याङ्घ्रिपाकृतिः ।
तेषा लक्ष्माणि न ब्रूमो ग्रन्थविस्तरकातराः ॥ ७४ ॥
पिण्डस्याहु षडङ्गानि शिरः पादौ करौ तथा ।
मध्य चेत्यथ वक्ष्यन्ते प्रत्यङ्गान्यखिलान्यपि ॥ ७५ ॥
त्वच सप्त कलाः सप्त स्नायुश्लेष्मजरायुभिः ।
छन्नाः कोशाग्निभि पक्वास्ता धातूनन्तरा ऽन्तरा ॥ ७६ ॥

भूमेरिति । स्थैर्यमत्वरत्वम् । धैर्यमापद्यप्यव्यामूढता । गौरव पतनासमवायिकारणभूतो गुण ॥ ७० ॥ अन्यानपि देहभेदान्कथयति—वातादीति । वातादयो वातपित्तश्लेष्माण । व्योमपवनतेजोऽम्बुभूमयो व्योमादय ॥ ७१ ॥ सप्तधा सप्तप्रकार सात्त्विको देहो ब्रह्मादीनाम्, षड्विधो राजसो देह पिशाचादीनाम्, त्रिविधस्तामसो देह पश्वादीनामिति । तेषा लक्षण किमिति नोक्तमित्यत आह—तेषामिति ॥ ७२–७४ ॥

(क०) जातस्य मातृजादीन्षड्विधान्भावान्भौतिकस्य देहस्य तत्तद्भूतगुणोपादान चोक्त्वा तस्य देहस्याङ्गप्रत्यङ्गधातुधमनीचक्रादिप्रपञ्चमाह—**पिण्डस्याहुरित्यादिना** । प्रत्यङ्गानि त्वक्कलाऽऽदीनि । वक्ष्यन्ते, समनन्तरमेवेत्यर्थ ॥ **त्वच सप्तेति** । पच्यमानादसृजो जायमाना भाभिन्यादय सप्त त्वच । यथोक्तमायुर्वेदे—

सीमभूताश्च धातूना काष्ठसारोपमा मताः ।
आद्या मासधरा मासे सिरा धमनयस्तथा ॥ ७७ ॥
स्नायुस्रोतासि रोहन्ति पङ्के पङ्कजकदवत् ।
असृड्मेदःश्लेष्मशकृत्पित्तशुक्रधराः पराः ॥ ७८ ॥

'इति भूतमयो देहस्तत्र सप्त त्वचो ऽसृज ।
पच्यमानात्प्रजायन्ते क्षीरात्सतानिका इव ॥
भासिनी लोहिनी श्वेता ताम्रा त्वग्वेदिनी तथा ।
स्याद्रोहिणी मासधरा सप्तमी परिकीर्तिता ॥'

इति । कलाः सप्तेति । रसक्लेदो धातुसारविशेष पूर्वोत्तरधात्वन्तरालस्थ स्नायुश्लेष्मजरायुच्छन्न कोशाग्निपक्क काष्ठसारोपम सूक्ष्मरूपत्वात्कलेत्युच्यते । तथा चोक्तम्—

'धात्वाशयान्तरक्लेदो विपक्क स्व स्वमूष्मणा ।
श्लेष्मस्नाय्वपराच्छन्न कलाऽऽख्य काष्ठसारवत् ॥'

इति । स्नाय्वादिच्छन्नत्वादिक विशेषण त्वक्कलोभयसाधारण वेदितव्यम् । तास्त्वच कलाश्च धातूनन्तरा ऽन्तरा त्वगादिसप्तधातूना मध्ये मध्ये सीमभूतास्तेषामेव धातूनामसकीर्णताऽऽपादका इत्यर्थ ॥ आद्येति । आद्या-त्वक्कला च मासधरा नाम, परा षट् त्वच कलाश्चासृगादिधरा ॥ ७५–७८ ॥

(सु०) देहे ऽङ्गप्रत्यङ्गानि विभजते—पिण्डस्येति ॥ धातूनन्तरा ऽन्तरा सप्ताना धातूना मध्ये मध्य इत्यर्थ ॥ काष्ठसारोपमा कठिना ऽऽद्या मासधरा त्वक्, अन्यास्त्वकठिना इत्यर्थ । सिराऽऽदय कुत्रोत्पद्यन्त इत्यत आह—मास इति । धमनय सिराविशेषा ॥ स्नायुस्तन्तुसनिभो मासबन्धनविशेष । अन्यास्त्वच कलाश्च कि धारयन्तीत्यत आह—असृगिति ॥ ७५—७८ ॥

त्वगसृङ्मासमेदोऽस्थिमज्जशुक्राणि धातवः ।
सप्त स्युस्तत्र चोक्ता त्वग्रक्त जाठरवह्निना ॥ ७९ ॥
पक्वाद्भवेदन्नरसादेव रक्तादिभि• परे ।
स्वस्वकोशाग्निना पक्वैर्जन्यन्ते धातव क्रमात् ॥ ८० ॥
रक्तश्लेष्मामपित्ताना पक्वस्य मरुतस्तथा ।
मूत्रस्य चाश्रया सप्त क्रमादाशयसज्ञकाः ॥ ८१ ॥
गर्भाशयो ऽष्टमः स्त्रीणा पित्तपक्वाशयान्तरे ।
प्रसन्नाभ्या कफासृग्भ्या हृदय पङ्कजाकृति ॥ ८२ ॥
सुषिर स्यादधोवक्त्र यकृत्प्लीहान्तरस्थितम् ।
एतच्च चेतनस्थान तदस्मिस्तमसा ऽऽवृते ॥ ८३ ॥
निमीलति स्वपित्यात्मा जागर्ति विकसत्यपि ।
द्वेधा स्वप्नसुषुप्तिभ्या स्वापो बाह्येन्द्रियाणि चेत् ॥ ८४ ॥

(क०) धातूनुद्दिश्य तेषामुत्पत्ति दर्शयति—**त्वगसृगि**त्यादिना । तत्र चोक्ता त्वगिति । चकारो भिन्नक्रम , त्वक्चेति । अयमर्थ —अत्र धातुत्वेन परिगणिता बाह्या त्वगपि धातुसीमभूतत्वग्लक्षणेनैवोक्तलक्षणेति ॥ ७९–८२- ॥

(सु०) धातून्विभजते—**त्वगि**ति ॥ रक्तादीनामुत्पत्तिप्रकारमाह—**रक्ते**ति। आमो ऽपक्वो रस ॥ स्त्रीणामधिकमाशय कथयति—**गर्भाशय** इति । हृदयस्योत्पत्तिप्रकार सस्थानविशेष स्थान च कथयति—**प्रसन्नाभ्या**मिति ॥७९–८२-॥

(क०) **एतच्च चेतनस्थान**मिति । एतत्पङ्कजाकृत्यधोवक्त्र सुषिर हृत्पङ्कजमित्यर्थ । अत्र चशब्दश्चेतनाभिव्यक्तिहेतुभूतस्थानान्तरसमुच्चयार्थ । स्थानान्तराणि तु ‘प्राणो ब्रह्म क ब्रह्म ख ब्रह्म’ इत्यादिश्रुत्युक्तानि प्राणा-

लीयन्ते हृदि जागर्ति चित्त स्वप्नस्तदोच्यते ।
मनश्चेल्लीयते प्राणे सुषुप्तिः स्यात्तदा ऽऽत्मनः ॥ ८५ ॥
स्वमपीतः परात्मनि स्वपित्यात्मेत्यतो मतः ।

दीनि । चेतनस्थान चेतनस्य कूटस्थब्रह्मण स्थानमभिव्यक्तिस्थानम् । अत्र चेतनशब्दो न जीवपर । कुत ? श्रुतिविरोधात्, 'अथ यदिद ब्रह्मपुरम्' इत्यादि श्रुतिर्हि 'पुण्डरीकसनिवेशम्' इत्यत्र पुण्डरीकस्य ब्रह्मस्थानत्वमाह । तथा हि भामत्या दहराधिकरणे 'अथ यदिदमस्मिन्ब्रह्मपुर दहर सूक्ष्म गुहाप्राय पुण्डरीकसनिवेश वेश्म दहरम्' इत्युपक्रम्य 'इमा सर्वा प्रजा अहरहर्ब्रह्म गच्छन्त्य एत ब्रह्मलोक न विन्दन्ति' इति श्रुतिमुदाहृत्य स्वापकाले ऽपि सर्व एवाय विद्वानविद्वाश्च जीवलोको हृत्पुण्डरीकाश्रय दहराकाशाख्य ब्रह्मलोक प्राप्तो ऽप्यनाद्यविद्यातम पटलपिहितदृष्टितया ब्रह्मभूयमापन्नो ऽहमस्मीति न वेद' इत्यादिना महता सदर्भेण दहरशब्द स्याकाशजीवपरत्वदूषणपूर्वक ब्रह्मपरत्वप्रतिपादनादत्रापि हृत्पङ्कजाधिष्ठातृत्वेन चेतन ब्रह्मैवेत्यवगन्तव्यम् । तदस्मिन्नित्यादि । अस्मिश्चेतने ब्रह्मणि तमसा ऽनाद्यविद्यया ऽऽवृने पिहिते सति, तद्धृदयपङ्कज यदा निमीलति मुकुली भवति तदा ऽऽत्मा जीव स्वपिति निद्राति, तत्पङ्कज यदा विकसति तदा जीवो जागर्त्यहमिति बुध्यते । अपिश्चार्थे । एतदुक्त भवति आत्मन स्वरूपाज्ञानेन जीवभावे ऽप्यनादिविश्वतैजसप्राज्ञव्यपदेशहेतवो जीवस्य जाग्रत्स्वप्नसुषुप्त्यवस्था भवन्तीति । द्वेधेति । स्वापो निद्रा तद्विशेषौ स्वप्नसुषुप्ती ॥ ८३–८५- ॥

(सु०) हृदयमेव स्वप्नजागरणयो कारणमित्याह—एतच्चेति । चेतनस्यात्मन स्थानम् । अस्मिन्निमीलति सत्यात्मा स्वपिति, विकसति सति जागर्ति । स्वापस्य द्वैविध्य कथयित्वा त लक्षयति—द्वेधेति । चित्त मन, जागर्ति स्वाम्रि

श्रवणे नयने नासे वदन गुदशेफसी ॥ ८६ ॥
बहिर्मलवहानि स्युर्नव स्रोतासि देहिनाम् ।
स्त्रीणा त्रीण्यधिकानि स्युः स्तनयोर्द्वे भगे ऽसृजः ॥ ८७ ॥
अस्थिस्नायुसिरामासस्थानि जालानि षोडश ।
षट् कूर्चाः करयोरङ्घ्र्योः कधराया च मेहने ॥ ८८ ॥
पार्श्वयोः पृष्ठवशस्य चतस्रो मासरज्जवः ।
सीवन्य पञ्च शिरसि द्वे जिह्वालिङ्गयोर्मते ॥ ८९ ॥
चतुर्दशाष्टादश वा [1]समता अस्थिराशय ।
अस्थ्ना शरीरे सख्या स्यात्षष्टियुक्त शतत्रयम् ॥ ९० ॥
वलयानि कपालानि रुचकास्तरुणानि च ।
नलकानीति तान्याहु पञ्चधा ऽस्थीनि सूरयः ॥ ९१ ॥
त्रीण्येवास्थिशतान्यत्र धन्वन्तरिरभाषत ।

कान्पदार्थान्पश्यति । स्वपितिशब्द निर्वक्ति—स्वमपीत इति । 'स्व ह्यपीतो भवति, तस्मादेन स्वपितीत्याचक्षते' इति श्रुते ॥ ८३–८९- ॥

(क०) **श्रवणे नयने** इत्यादिरस्मद्विरचिते ऽध्यात्मविवेके वीक्ष्यता बुधैरित्यन्त स्पष्टार्थ ॥ ८६–११९ ॥

(सु०) बहिर्मलवहानि रन्ध्राणि कथयति—**श्रवणे** इति ॥ ८६–८७ ॥ जलानि षोडश षट् कूर्चान्रज्जूश्चतस्र सप्त सीवनीश्च कथयति—**अस्थी** त्यादिना ॥ ८८, ८९ ॥ [2]मतभेदेनास्थिराशीन्कथयति—**चतुर्दशेति** ॥ ८९- ॥ अस्थीनि सख्याति—**अस्थ्नामिति** ॥ -९० ॥ आकारविशेषेण पञ्चधा ऽस्थान्याह—**वलयानीति** ॥ ९१ ॥ मतभेदेनास्थ्नामन्यथा सख्या ख्यापयति—

[1] सीमन्ता
[2] नामभेदेन

द्वे शते त्वस्थिसधीना स्यातामत्र दशोत्तरे ॥ ९२ ॥
कोरकाः प्रतरास्तुन्ना सीवन्य स्युरुलूखलाः ।
सामुद्गा मण्डला शङ्खावर्ता वायसतुण्डका ॥ ९३ ॥
इत्यष्टधा समुद्दिष्टा मुनीन्द्रैरस्थिसधय ।
पेशीस्नायुसिरासधिसहस्रद्वितय मतम् ॥ ९४ ॥
नव स्नायुशतानि स्युश्चतुर्धा स्नायवो मता ।
प्रतानवत्य सुषिराः कण्डरा' पृथुलास्तथा ॥ ९५ ॥
बन्धनैर्बहुभिर्बद्धा भूरिभारक्षमा भवेत् ।
नौरम्भसि यथा स्नायुशतबद्धा तनुस्तथा ॥ ९६ ॥
पञ्च पेशीशतान्याहु शरीरस्थानि सूरय ।
अधिका विशतिः स्त्रीणा तत्र स्युः स्तनयोर्दश ॥ ९७ ॥
यौवने ता' प्रवर्धन्ते दश योनौ तु तत्र च ।
द्वे अन्तः प्रसृते बाह्ये द्वे तिस्रो गर्भमार्गगाः ॥ ९८ ॥
शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्ता ऽत्र तृतीयके ।
आवर्ते गर्भशय्या ऽस्ति पित्तपक्वाशयान्तरे ॥ ९९ ॥
रोहिताभिधमत्स्यस्य सदृशी तत्र पेशिका ।
शुक्रार्तवप्रवेशिन्यस्तिस्रः प्रच्छादिका मताः ॥ १०० ॥
सिराधमनिकाना तु लक्षाणि नवविंशति ।
सार्धानि स्युर्नवशती षट्पञ्चाशद्युता तथा ॥ १०१ ॥

त्रीणीति ॥ ९१ - ॥ अस्थिसधीन्सख्याति—द्वे शते इति ॥ -९२ ॥ आकार-विशेषेणास्थिसधीनामष्टविधत्व कथयति—कोरका इति ॥ ९३, ९३- ॥ पेशी-स्नायुसिरासधीन्सख्याय स्नायुभेदान्कथयति—पेशीति ॥ -९४, ९५ ॥ स्नायू-नामुपयोग कथयति—बन्धनैरिति ॥ ९६ ॥ पुस्त्रीभेदेन पेशी सख्याति—पञ्चेति ॥ ९७–१०० ॥ सिराधमनिका सख्याति—सिरेति ॥ १०१,

दश मूलसिरा ओजोवाहिन्यो हृदयाश्रयाः ।
द्व्यङ्गुल चाङ्गुलदल यव यवदल तथा ॥ १०२ ॥
गत्वा द्रुमदलस्येव सीवन्यः प्रतता यदा ।
भिद्यन्ते तास्तदा सप्त शतानि परिसख्यया ॥ १०३ ॥
तासु जिह्वास्थिते द्वे द्वे वाग्रसज्ञानकारणे ।
घ्राणे गन्धवहे द्वे द्वे मेषोन्मेषकृतौ दृशोः ॥ १०४ ॥
श्रोत्रयोः शब्दवाहिन्यौ तासु द्वे शार्ङ्गिणोदिते ।
धमन्यो रसवाहिन्यश्चतुर्विंशतिरीरिता ॥ १०५ ॥
कुल्याभिरिव केदारास्ताभिर्देहो ऽभिवर्धते ।
एताः प्रतिष्ठिता नाभ्या चक्रनाभावरा इव ॥ १०६ ॥
ऊर्ध्व दश दशाधस्ताच्चतस्रस्तिर्यगायताः ।
ऊर्ध्वगा हृदय प्राप्ता प्रतायन्ते पृथक्त्रिधा ॥ १०७ ॥
वात पित्त कफ रक्त रस द्वे द्वे विमुञ्चत. ।
शब्द रूप रस गन्ध द्वे द्वे तत्रावगच्छत ॥ १०८ ॥
द्वे द्वे च भाषण घोष स्वाप बोध च रोदनम् ।
कुर्वाते द्वे नरे शुक्र स्तन्य तु स्रवतः स्त्रियाम् ॥ १०९ ॥

१०१ ॥ सीवनीना दृष्टान्तेन सस्थानविशेष दर्शयित्वा सख्या स्थान विभाग च कथयति—द्व्यङ्गुलमिति । गन्धवहे गन्धज्ञानकारणे ॥ -१०२—१०४- ॥ रसवाहिनीर्धमनी सख्याय तासा प्रयोजनमाह—धमन्य इति ॥ -१०५, १०५- ॥ तासा स्थान सस्थान च कथयति—एता इति ॥ -१०६, १०६- ॥ ऊर्ध्वायता दश, अधआयता दश, तिर्यगायताश्चतस्र इत्युक्तम्, तत्रोर्ध्वायताना व्यापारभेदेन त्रैविध्य कथयति—ऊर्ध्वगा इति ॥ -१०७—१०९ ॥ अधोगताना त्रैविध्य

अधोगता अपि त्रेधा पृथक्पक्वाशयस्थिताः ।
प्रवर्तयन्ति तत्राद्या दश वातादि पूर्ववत् ॥ ११० ॥
अन्न भुक्त धमन्यौ द्वे वहतो ऽम्बुसमाश्रयात् ।
तोयं मूत्र बल द्वे द्वे नारीणामार्तव त्विमे ॥ १११ ॥
विमुञ्चतो द्वे स्रोतासि द्वे स्थूलान्त्रान्विते शकृत् ।
स्वेद समर्पयन्त्यष्टौ तिरश्च्यो बहुधा मताः ॥ ११२ ॥
रोमकूपेषु सन्त्यासा मुखानि स्वेदमुक्तये ।
प्रवेशयन्ति चाभ्यङ्गलेपादिप्रभवान्रसान् ॥ ११३ ॥
जीवस्थानानि मर्माणि शत सप्तोत्तर विदु. ।
सार्धकोटित्रय रोम्णा श्मश्रुकेशास्त्रिलक्षकाः ॥ ११४ ॥
स्रोतःसिराश्मश्रुकेशैः सह रोम्णा तु कोटय ।
चतु.पञ्चाशदाख्याता सप्तषष्ट्या च सार्धया ॥ ११५ ॥
लक्षाणा सहितामान जलादेरधुनोच्यते ।
दशाञ्जलि जल ज्ञेय रसस्याञ्जलयो नव ॥ ११६ ॥
रक्तस्याष्टौ पुरीषस्य सप्त स्यु श्लेष्मणस्तु षट् ।
पित्तस्य पञ्च चत्वारो मूत्रस्याञ्जलयस्त्रयः ॥ ११७ ॥
वसाया मेदसो द्वौ तु मज्ज एको ऽञ्जलिर्मत.[1] ।
अर्धाञ्जलि शिरोमज्जा श्लेष्मसारो बल तथा ॥ ११८ ॥

कथयति—अधोगता इति ॥ १०९- ॥ तासा व्यापार कथयति—प्रवर्तयन्तीति । बल वीर्यम् ॥ -११०—१११- ॥ तिरश्चीना विशेष कथयति—तिरश्चय इति ॥ -११२, ११३ ॥ मर्माणि परिसख्याति—जीवस्थानानीति ॥ ११४, ११४ ॥ सहिताना मान कथयति— सप्तषष्ट्येति । सहिता रोमादिसधि ।

[1] मज्जा त्वञ्जलिसमित

**इति प्रत्यङ्गसक्षेपो विस्तरस्त्विह तत्त्वतः ।**
**अस्मद्विरचिते ऽध्यात्मविवेके वीक्ष्यता बुधै ॥ ११९ ॥**
**गुदलिङ्गान्तरे चक्रमाधाराख्य चतुर्दलम् ।**
**परम सहजस्तद्वदानन्दो वीरपूर्वकः ॥ १२० ॥**
**योगानन्दश्च तत्र स्यादैशानादिदले फलम् ।**
**अस्ति कुण्डलिनी ब्रह्मशक्तिराधारपङ्कजे ॥ १२१ ॥**
**आब्रह्मरन्ध्रमृजुता नीतेयममृतप्रदा ।**

द्रवमान प्रतिज्ञाय कथयति—जलादेरिति । रसस्यान्नरसस्य । [1]मज्ञो मज्जाख्य-धातो । विस्तरस्त्वध्यात्मविवेके वीक्ष्यतामित्यनेन सो ऽपि मत्कृतो ग्रन्थो ऽस्तीति कर्ता स्वातिशय प्रतिपादयति ॥ ११६–११९ ॥

(क०) **गुदलिङ्गान्तर** इति । गुदलिङ्गयोर्मध्ये स्थितस्याधार-चक्रस्यैशानादिदलचतुष्टये जन्मकाले जीवस्थित्या परमानन्दादय फलानि । आधारपङ्कजे तस्मिन्नेवाधारचक्रे । कुण्डलिनीत्यन्वर्थतया सर्परूपिणी ब्रह्म-शक्ति, ब्रह्मणो ऽसङ्गोदासीनस्य परमात्मन कर्तृत्वाद्युपहिताकारकारिण्य-विद्याशक्ति । सैव मूर्तिमती कुटिलाकारतया कुण्डलिनीत्युच्यते । आ-ब्रह्मरन्ध्रम्, ब्रह्मरन्ध्र नाम सुषुम्णाया अग्र शिरसि सहस्रदलचक्रमध्यगम्, तत्पर्यन्तम् । ऋजुता नीतेति । गुरूपदिष्टप्रकारेण यमनियमादिक्रमेण वायोरिडापिङ्गलयो सचार निरुध्य तेन वायुना सवह्निना ब्रह्मग्रन्थौ सुषुम्णामूलरन्ध्राच्छादिनीं कुण्डलिनीफणामपसार्य तत्र प्रवेशितेन तेन ब्रह्म-विष्णुरुद्रग्रन्थीना क्रमाद्भेदे सति कुण्डलिनी चात्मवक्रता विहाय यदा ऋजुता प्राप्यते । अमृतप्रदेति । तदा कुण्डलिनी स्वार्जवाद्ब्रह्मरन्ध्रवि-

[1] मज्जा तदाख्यो धातु

**स्वाधिष्ठानं लिङ्गमूले षट्पत्रं चक्रमस्य च ॥ १२२ ॥**
**पूर्वादिषु दलेष्वाहुः फलान्येतान्यनुक्रमात् ।**
**प्रश्रय क्रूरता गर्वनाशो मूर्च्छा ततः परम् ॥ १२३ ॥**
**अवज्ञा स्यादविश्वासः कामशक्तेरिदं गृहम् ।**

निर्गतेन स्ववालाग्रेण सुधाऽऽधारं सहस्रदलचक्रं विभिद्य ततो ऽमृतं द्रावयतीति तथोक्ता ॥ १२०–१२१- ॥

(सु०) एवमङ्गप्रत्यङ्गान्युक्त्वा चक्राणि वक्तुमुपक्रमते—**गुदलिङ्गान्तर** इति । गुदलिङ्गयोरन्तरे मध्य आधारसंज्ञकं चक्रं चतुर्दलपद्माकारमास्ते ॥ तस्य चतुर्णां दलानां फलं कथयति—**परम** इति । ऐशानदले परमानन्द, आग्नेयदले सहजानन्द, नैर्ऋतदले वीरानन्द, वायव्यदले योगानन्द । ततश्चाधारकमलस्य विदिक्स्थितान्येव चत्वारि दलानीति लभ्यते ॥ **अस्तीति** । कुण्डलिनीसंज्ञिका ब्रह्मशक्ति, ब्रह्मप्राप्तिकारणत्वात्, आधारपङ्कजे विद्यते । सेयमाब्रह्मरन्ध्रं ब्रह्मरन्ध्रपर्यन्तमृजुतां नीता सत्यमृतप्रदा मोक्षप्रदा ॥ १२०–१२१ ॥

(क०) **स्वाधिष्ठानमिति** । आधारचक्रादूर्ध्वं लिङ्गमूले स्वाधिष्ठानाख्यं षड्दलं द्वितीयं चक्रम् । तस्य पूर्वादिदलेषु क्रमात्प्रश्रयादीनि फलान्याह—**अस्य चेति** । अवज्ञा स्यादिति । धर्मपरो ऽयं निर्देश ॥-१२२–१२३-॥

(सु०) स्वाधिष्ठानसंज्ञितं चक्रं कथयति—**स्वाधिष्ठानमिति** । षट्पत्रं षड्दलकमलाकारम् । एतस्य षण्णां दलानां फलानि कथयति—**अस्य चेति** । प्रश्रयो विनय पूर्वदिगवस्थितस्य दलस्य फलम् । तत्रावस्थित आत्मा प्रश्रयवान्भवतीत्यर्थ । क्रूरता दुष्टकर्माभिनिवेश । गर्व आत्मोत्कर्षभावनम्, तस्य नाश । मूर्च्छा मोहाधिक्यम् । अवज्ञा ऽवगणना । अविश्वास सर्वत्र सशङ्कत्वमनाश्वासो वा । इदं स्वाधिष्ठानचक्रं कामोत्पादिकाया शक्तेर्गृहमाश्रय ॥ -१२२–१२३- ॥

नाभौ दशदल चक्र मणिपूरकसज्ञितम् ॥ १२४ ॥
सुषुप्तिरत्र तृष्णा स्यादीर्ष्या पिशुनता तथा ।
लज्जा भय घृणा मोहः कषायो ऽथ विषादिता ॥ १२५ ॥
क्रमात्पूर्वादिपत्रे तु स्याद्भानुभवन च तत् ।
हृदये ऽनाहत चक्र शिवस्य प्रणवाकृतेः ॥ १२६ ॥
पूजास्थान तदिच्छन्ति दलैर्द्वादशभिर्युतम् ।
लौल्यप्रणाशः प्रकटो वितर्को ऽप्यनुतापिता ॥ १२७ ॥
आशा प्रकाशश्चिन्ता च समीहा समता तत ।
क्रमेण दम्भो वैकल्य विवेको ऽहकृतिस्तथा ॥ १२८ ॥
फलान्येतानि पूर्वादिदलस्थस्यात्मनो जगु ।

(क०) तत ऊर्ध्व नाभिहृदयकण्ठघण्टिकाभ्रूमध्यललाटकेशमूल ब्रह्मरन्ध्रेष्वष्टसु स्थानेषु क्रमेण मणिपूरकानाहतविशुद्धिललनाऽऽज्ञामन सोम सहस्रपत्राख्यानामष्टाना चक्राणा तच्चक्रगतदलसख्यया प्रागाद्यारम्भक्रमेण प्रतिदल पृथक्फलान्याह—**नाभौ दशदलमित्यादिना** ॥ १२४–१२८ ॥

(सु०) मणिपूरकचक्र कथयति—**नाभाविति** । एतस्य पूर्वादिदलाना फलानि कथयति—**सुषुप्तिरिति** । सुषुप्तिर्बाह्येन्द्रियाणा मनसश्चोपरमावस्था । तृष्णा ऽभिलाष । ईर्ष्या परगुणासहनम् । पिशुनता विद्यमानाविद्यमानपरदोषसूचनम् । लज्जाभये प्रसिद्धे । घृणा परदु खप्रहाणेच्छा । मोहो जाग्रदवस्थायामपि विषया-परिज्ञानम् । कषाय कलुषाशयत्वम् । विषाद सचिन्त दु खम् । तन्मणिपूरक चक्र भानो सूर्याख्यस्य प्राणस्य भवन स्थानम् ॥ १२९, १२९ ॥ अनाहत चक्र कथयति—**हृदय इति** । शिवस्य प्रणवाकृतेरोकाराकृते पूजास्थानमिति, तत्र स्थित परमेश्वर ध्यात्वा मनसा पूजयेदित्यर्थ । आत्मन पूर्वादिद्वा-दशदलेष्ववस्थानेन फलानि कथयति—**लौल्येति** । लोलस्य भावो लौल्यम्,

कण्ठे ऽस्ति भारतीस्थान विशुद्धिः षोडशच्छदम् ॥ १२९ ॥
तत्र प्रणव उद्गीथो हुफड् वषडथ स्वधा ।
स्वाहा नमो ऽमृत सप्त स्वराः षड्जादयो विषम् ॥ १३० ॥
इति पूर्वादिपत्रस्थे फलान्यात्मनि षोडश ।
ललनाऽऽख्य घण्टिकाया चक्र द्वादशपत्रकम् ॥ १३१ ॥
मदो मानस्ततः स्नेहः शोक खेदश्च लुब्धता ।
अरतिः सभ्रमश्चोर्मि श्रद्धातोषोपरोधिताः ॥ १३२ ॥
फलानि ललनाचक्रे स्युः पूर्वादिदलेष्विति ।

तस्य प्रणाशो निश्चलत्वम् । प्रकट इति प्रकटत्वेन वितर्कस्य विशेषणम् । वितर्क उभयोर्मध्ये ऽन्यतरोपादेयताविचार । अनुतापिता पश्चात्तापवत्त्वम् । आशेष्टप्राप्तेरभिलाष । प्रकाश आकारगुप्तेरभाव । चिन्ता विचारमात्रम् । समीहा ऽनिष्टनिवृत्तीच्छा । समतोत्कर्षापकषशून्यतया सर्वेषा भावनम् । दम्भो लोकोपसग्रहार्थमश्रद्धया कर्मानुष्ठानम् । वैकल्यमनवस्थत्वम् । विवेक सम्यग्विचाय कार्यकरणम् । अहकृतिरशक्ये ऽपि कार्ये चिकीर्षाऽध्यवसाय ॥-१२६–१२८-॥

(क०) उद्गीथ इति साम्नो द्वितीयो भाग , साम्नो हि पञ्च भागा —प्रस्ताव प्रथम , उद्गीथो द्वितीय , प्रतिहारस्तृतीय , उपद्रवश्चतुर्थ , निधन पञ्चम इति । प्रणव इत्युद्गीथस्यादौ प्रयोज्य ओंकार । घण्टिकाया जिह्वामूले । ऊर्मयो ऽशनायापिपासाशोकमोहजरामरणानि षडूर्मय ॥ -१२९–१३२ ॥

(सु०) विशुद्धिसज्ञक चक्र कथयति—कण्ठ इति । भारतीस्थानम् , भारत्या सरस्वत्या स्थानमाश्रय । तत्र भाविता वाग्देवता वाग्वैभव ददातीत्यर्थ । एतस्य चक्रस्य पूर्वादिपत्रावस्थितावात्मन षोडश फलानि कथयति—तत्रेति । प्रणव ओंकार । पूर्वपत्रे प्रणवानुसधानेनात्मा श्रेय प्राप्नोति । उद्गीथ

**भ्रूमध्ये त्रिदल चक्रमाज्ञासंज्ञ फलानि तु ॥ १३३ ॥**
**आविर्भावा सत्त्वरजस्तमसा क्रमतो मता: ।**
**ततो ऽप्यस्ति मनश्चक्र षड्दल तत्फलानि तु ॥ १३४ ॥**
**स्वप्नो रसोपभोगश्च घ्राण रूपोपलम्भनम् ।**
**स्पर्शन शब्दबोधश्च पूर्वादिषु दलेष्विति ॥ १३५ ॥**

सामभक्तिविशेष । द्वितीयपत्रे स्थितमुद्गीथमुद्गीथोपासनाया चिन्तयेदित्यथ । हुफडिति हवि प्रदाने ऽव्ययम् । वषडित्यपि । स्वधेति पित्रुद्देशेन हवि प्रदाने ऽव्ययम् । स्वाहेति देवतोद्देशेन । नम इति नमस्कारे ऽव्ययम् । एतानि तत्तद्दलेषु चिन्तनीयानीत्यर्थ । अमृत पीयूषम् । तद्दले स्थित आत्मा पीयूषाप्लुत इव सुखितो भवतीत्यर्थ । सप्त स्वरा षड्जादय षड्जर्षभगाधारमध्यमपञ्च-मधैवतनिषादा । तेषा तानि तानि दलान्युपासनस्थानानि । विषममृतव-द्व्याख्येयम् । विषदलस्थ आत्मा दु खितो भवतीत्यर्थ ॥ ललनाऽऽख्य चक्र कथयति—**ललनाऽऽख्यमिति** । घण्टिका ऽवटु । एतस्य पत्रफलानि कथ-यति—**मद** इति । मदो मत्तता । मान उत्कर्षभावनया कार्याकार्यानवेक्षणम् । स्नेह स्निग्धता । शोको विज्ञातकारणक दु खम् । खेदो ऽविज्ञातकारणक दु खम् । लुब्धता ऽभिलाषाधिक्यम् । अरति सुखसाधनेष्वप्युद्वेग । सभ्रम आवेग । ऊर्मय षडागमशास्त्रप्रसिद्धा —

> ‘बुभुक्षा च पिपासा च शोकमोहौ जरामृती ।
> ऊर्मय षडिति प्राणबुद्धिदेहेषु सस्थिता ॥’

इति । श्रद्धा ऽऽस्तिक्यबुद्धि । तोष प्रसिद्ध । उपरोधिता दाक्षि-ण्यम् ॥ -१२९–१३२- ॥

(क०) ध्यानाश्रु, ध्यानाज्जातमश्रु ध्यानाश्रु ॥ १३३–१४४- ॥

(सु०) त्रिदलमाज्ञाचक्र कथयति—**भ्रूमध्य** इति । तस्य फलानि कथ-यति—**आविर्भावा** इति । प्रथमदले सत्त्वाविर्भाव , द्वितीयदले रजआविर्भाव ,

ततो ऽपि षोडशदल सोमचक्रमितीरितम् ।
दलेषु षोडशस्वस्य कला षोडश सस्थिता ॥ १३६ ॥
कृपा क्षमा ऽऽर्जव धैर्य वैराग्य धृतिसमदौ ।
हास्य रोमाञ्चनिचयो ध्यानाश्रु स्थिरता ततः ॥ १३७ ॥
गाम्भीर्यमुद्यमो ऽच्छत्वमौदार्यैकाग्रते क्रमात् ।
फलान्युद्यन्ति जीवस्य पूर्वादिदलगामिनः ॥ १३८ ॥
चक्र सहस्रपत्र तु ब्रह्मरन्ध्रे सुधाधरम् ।
तत्सुधासारधाराभिरभिवर्धयते तनुम् ॥ १३९ ॥
अनाहतदले पूर्वे ऽष्टमे चैकादशे तथा ।
द्वादशे च स्थितो जीवो गीतादे सिद्धिमृच्छति ॥ १४० ॥
चतुर्थषष्ठदशमैर्दलैर्गीतादि नश्यति ।
विशुद्धेरष्टमादीनि दलान्यष्टौ श्रितानि तु ॥ १४१ ॥

तृतीयदले तमआविर्भाव , मन सज्ञक षड्दल चक्र कथयति—तत इति । मनश्चक्र मन सज्ञ चक्रम् । मन सज्ञा तु तत्र मनसो ऽवस्थानात् । फलान्याह—तत्फलानीति । स्वप्न सुप्त्यवस्था । रसोपभोगो ऽन्नरसस्योपभोग । घ्राण गन्धज्ञानम् । रूपोपलम्भन दर्शनम् । स्पर्शन त्वगिन्द्रियकरणक ज्ञानम् । शब्दबोध श्रवणम् । सोमाख्य चक्र कथयति—तत इति । ततो ऽप्युपरिप्रदेशे । अस्य पूर्वादिदलावस्थानेन जीवस्य फलानि कथयति—कृपेति । कृपा परानुग्रहापेक्षा । क्षमा कोपकारणे सत्यप्यकोप । आर्जवमवक्रबुद्धित्वम् । धैर्यमस्खलितचेतस्त्वम् । वैराग्य ससारासारताबुद्धि । धृतिर्धारणम् । संमदो हर्ष । हास्यादीनि गाम्भीर्यान्तानि प्रसिद्धानि । उद्यम उद्योग । अच्छत्वमकलुषमनस्त्वम् । औदार्य स्वभावेन दानशूरता । एकाग्रतैकतानत्वम् ॥ चक्रान्तर कथयति—चक्रमिति । सुधाधरममृतधारकम् । तद्व्यापार कथयति—तदिति । एतेषा चक्राणा तत्तद्दलावस्थाने जीवस्य फलानि कथयन्प्रकृतोपयोगमाह—अनाहतेति । अनाहतचक्रस्य दले पत्रे पूर्वे पूर्वदिक्स्थिते प्रथमे वा ऽष्टमादिषु

दद्युर्गीतादिससिद्धि षोडश तद्विनाशकम् ।
दशमैकादशे पत्रे ललनाया तु सिद्धिदे ॥ १४२ ॥
नाशक प्रथमं तुर्यं पञ्चम च दल विदु ।
ब्रह्मरन्ध्रस्थितो जीव सुधया सप्लुतो यथा ॥ १४३ ॥
तुष्टो गीतादिकार्याणि सप्रकर्षाणि साधयेत् ।
एषा शेषेषु पत्रेषु चक्रेष्वन्येषु च स्थित ॥ १४४ ॥
जीवो गीतादिससिद्धि न कदाचिदवाप्नुयात् ।
आधाराद् द्व्यङ्गुलादूर्ध्वं मेहनाद् द्व्यङ्गुलादधः ॥ १४५ ॥
एकाङ्गुल देहमध्य तप्तजाम्बूनदप्रभम् ।
तत्रास्ते ऽग्निशिखा तन्वी चक्रात्तस्मान्नवाङ्गुले ॥ १४६ ॥

च सस्थितो जीवो गीतादे सिद्धिमृच्छति गीतनृत्तवाद्याना सिद्धिमाप्नोति, अथ वा तान्यभिलषति । चतुर्थषष्ठदशमदलेषु स्थिते जीवे गीतादि नश्यति । विशुद्धेरिति । विशुद्धिसञ्ज्ञकस्य चक्रस्याष्टमादिष्वष्टसु दलेषु सस्थिते जीवे गीतादि सिध्यति । षोडशदलावस्थिते नश्यति । ललनाऽऽख्यचक्रस्य दलविशेषावस्थाने जीवस्य गीतादिसिद्ध्यसिद्धी कथयति—दशमेति । दशम चैकादश चेति द्वे पत्रे गीतादिसिद्धिदायके भवत । प्रथमादीनि तु गीतादिनाशकानीति विदुर्योगशास्त्रविद । ब्रह्मरन्ध्रावस्थानेन जीवस्य गीतादिसिद्धि कथयति—ब्रह्मरन्ध्रेति । ब्रह्मरन्ध्रे तिष्ठञ्जीवो ऽमृतप्लुत इव निर्वृति प्राप्त सस्तुष्टो निरभिलाषो गीतादि साधयेन्निष्पादयेत् । एव गीतादे साधकानि नाशकानि च दलानि कथयित्वा साधारणानि कथयति—एषामिति । एषामनाहतविशुद्धिललनाऽऽख्याना चक्राणा शेषेषु साधकनाशकेभ्यो ऽन्येषु पत्रेषु, अन्येषु चक्रेषु विशुद्ध्यादेरन्येषु मणिपूरकादिचक्रेषु च स्थितो जीवो गीतादिसिद्धावुदासीन इत्यर्थ ॥ १३३–१४४ ॥

(क०) देहविधारकनाडीसदोहमूलभूतस्य ब्रह्मग्रन्थे स्थान स्वरूप चाह—आधाराद् द्व्यङ्गुलादिति । आधारादाधारचक्रादवधिभूतात् ।

देहस्य कदो ऽस्त्युत्सेधायामाभ्या चतुरङ्गुलः ।
ब्रह्मग्रन्थिरिति प्रोक्त तस्य नाम पुरातनै ॥ १४७ ॥
तन्मध्ये नाभिचक्र तु द्वादशारमवस्थितम् ।
लूतेव तन्तुजालस्था तत्र जीवो भ्रमत्ययम् ॥ १४८ ॥
सुषुम्णया ब्रह्मरन्ध्रमारोहत्यवरोहति ।
जीवः प्राणसमारूढो रज्ज्वा कोह्राटिको यथा ॥ १४९ ॥
सुषुम्णा परितो नाड्यः कंदादा ब्रह्मरन्ध्रतः ।
[1]कदीकृत्य स्थिताः कद शाखाभिस्तन्वते तनुम् ॥ १५० ॥

**देहमध्यमिति** । देहस्योर्ध्वाधोभागयोर्मध्ये स्थितत्वाद्देहमध्यम् । **चक्रात्तस्मादिति** । देहमध्यचक्रादवधे । **ब्रह्मग्रन्थिरिति** । ब्रह्माधिष्ठितत्वाद्ब्रह्म ग्रन्थि । तन्मध्ये ब्रह्मग्रन्थिमध्ये । नाभिचक्र द्वादशार द्वादशाराणि यस्य तत्तथोक्तम् । आतानवितानात्मकनाडीसघातरूपत्वान्नाभिचक्रस्य तन्तुजाल दृष्टान्त । कदीकृत्य, अकद कद कृत्वा । अभूततद्भावे च्वि । ताश्च नाड्य स्वशाखाभि कदीकृत कद तनु देहाकार तन्वते ॥ -१४५—१५० ॥

(सु०) अग्निशिखास्थान कथयति—आधारादिति । आधारचक्राद् द्वयङ्गुलमात्रमूर्ध्वप्रदेशे मेहनाल्लिङ्गस्थानाद् द्वयङ्गुलमात्रमध प्रदेश एकाङ्गुलि प्रमाण सुवर्णवर्ण देहमध्य देहस्य मध्यप्रदेश । तत्र तन्वी कृशा ऽग्निशिखा ऽऽस्ते । तस्माच्चक्राद्देहमध्यादाधाराद्वा नवाङ्गुले नवाङगुलप्रमाणे । ब्रह्मग्रन्थि कथयति— देहस्येति । देहस्य शरीरस्य कदो विस्तारकारणम् । उत्सेधो दीर्घोच्छ्राय । नाभिस्थितश्चतुरङ्गुलप्रमाणक । तस्य नाम ब्रह्मग्रन्थिरिति । तन्मध्य इति । तस्य ब्रह्मग्रन्थेर्मध्ये नाभिचक्राख्य चक्र द्वादशदलमस्ति । लूतोर्णनाभ , तद्वज्जीवस्तत्र भ्रमति । सुषुम्णयेति । आ ऽऽधारादाब्रह्मरन्ध्रमायता

[1] कोडीकृत्य

**ताश्च भूरितरास्तासु मुख्याः प्रोक्ताश्चतुर्दश ।**
**सुषुम्णेडा पिङ्गला च कुहूरथ सरस्वती ॥ १५१ ॥**
**गाधारी हस्तिजिह्वा च वारुणी च यशस्विनी ।**
**विश्वोदरा शङ्खिनी च तत पूषा पयस्विनी ॥ १५२ ॥**
**अलम्बुसेति तत्राद्यास्तिस्रो मुख्यतमा मताः ।**
**सुषुम्णा तिसृषु श्रेष्ठा वैष्णवी मुक्तिमार्गगा ॥ १५३ ॥**
**कदमध्ये स्थिता तस्या इडा सव्ये ऽथ दक्षिणे ।**
**पिङ्गलेडापिङ्गलयोश्चरतश्चन्द्रभास्करौ ॥ १५४ ॥**
**क्रमात्कालगतेर्हेतू सुषुम्णा कालशोषिणी ।**

नाडी सुषुम्णा । तया तस्य सकाशाद्ब्रह्मरन्ध्रपर्यन्तमारोहति ब्रह्मरन्ध्राच्चावरोहति । प्राणसमारूढ प्राणपवनेनोपश्लिष्ट । कोहलाटिको विषमनर्तक । सुषुम्णा परित सर्वत सुषुम्णाया कद ब्रह्मग्रन्थि क्रोडीकृत्य व्याप्य स्थिता नाड्यस्तनु शरीर तन्वते विस्तारयन्ति ॥ -१४९–१५० ॥

(क०) **कालगतेरि**ति । अत्र कालशब्देन जीवस्य पिण्डावस्थानिमित्तभूतास्तपनपरिस्पदक्षणा उच्यन्ते, त एवायुरिति यावत्, तस्य गते क्षयस्येत्यर्थ । **कालशोषिणी**ति । इह कालशब्देन मृत्युरुच्यते, तस्य शोषिणी प्रतिबन्धिनी ॥ १५१–१५५ ॥

(सु०) तासु नाडीषु मुख्याश्चतुर्दशेति कथयति—**ताश्चे**ति १५०- ॥ तासा नामानि कथयति—**सुषुम्णे**ति । चतुर्दशाना मध्ये सुषुम्णेडापिङ्गलाना तिसृणा नाडीना मुख्यत्व तासु च सुषुम्णाया मुख्यत्वमाह—**तत्राद्या** इति । सुषुम्णाया मुख्यत्वे कारणमाह—**वैष्णवी**ति । वैष्णवी विष्णुदेवताका । अथ वा, वैष्णवी या मायाशक्तिस्तद्रूपिणी । मुक्तिमार्गगा मोक्षप्रदायिना । अथ वा, मुक्तिमार्गो मुक्तेरुपाय आत्मा, तत्सबन्धिनी, आत्मनो ऽधिष्ठानभूतेत्यर्थ ॥

सरस्वती कुहूश्चास्ते सुषुम्णायास्तु पार्श्वयोः ॥ १५५ ॥
इडायाः पृष्ठपूर्वस्थे गाधारीहस्तिजिह्विके ।
क्रमात्पूषायशस्विन्यौ पिङ्गलापृष्ठपूर्वयोः ॥ १५६ ॥
विश्वोदरा मध्यदेशे स्यात्कुहूहस्तिजिह्वयोः ।
मध्ये कुहूयशस्विन्योर्वारुणी सस्थिता मता ॥ १५७ ॥
पूषासरस्वतीमध्यमधिशेते पयस्विनी ।
गाधारिकासरस्वत्योर्मध्ये वसति शङ्खिनी ॥ १५८ ॥
अलम्बुसा कदमध्ये तत्रेडापिङ्गले क्रमात् ।
सव्यदक्षिणनासाऽन्तं कुहूरामेहन पुर ॥ १५९ ॥

कदस्य ब्रह्मग्रन्थेर्मध्ये स्थिता । इडापिङ्गले तस्या वामदक्षिणत स्थिते इत्यर्थ । तयो प्रचरत प्राणपवनस्य सज्ञाविशेषमाह—इडापिङ्गल्योरिति । वामनाडयनुसारी प्राणपवनश्चन्द्र, दक्षिणनाडयनुसारी तु भास्कर इत्युच्यते । कथ प्राणपवनस्य चन्द्रत्व भास्करत्व चेत्यत आह—कालगतेर्हेतू इति । यथा चन्द्रसूर्यौ कालज्ञानकारणे तथा तावपीत्यर्थ ॥ १५१–१५९ ॥

(क०) **सर्वगा तु वारुणीति** । अत्र वारुणीति नाडी तु सर्वगा सकलशरीरव्यापिनी ॥ लोकरञ्जन भवभञ्जनमिति द्वे गेयविशेषणे ॥ -१५५–१६७ ॥

(सु०) सरस्वत्यादीना नाडीनामवस्थानमाह—सरस्वतीति । सरस्वती सुषुम्णाया दक्षिणपार्श्वे तिष्ठति, कुहूर्वामपार्श्वे, गाधारीडाया पश्चात्प्रदेशे, हस्तिजिह्विका पूर्वप्रदेशे, पूषा पिङ्गलाया पृष्ठप्रदेशे, यशस्विनी पूर्वप्रदेशे, विश्वोदरा कुहूहस्तिजिह्वयोर्मध्ये, वारुणी कुहूयशस्विन्योर्मध्ये । पयस्विनी पूषासरस्वत्योर्मध्यमधिशेते । 'अधिशीङ्स्थाऽऽसा कर्म' इति कर्मत्वम् । शङ्खिनी गाधारिकासरस्वत्योर्मध्ये तिष्ठति, अलम्बुसा पूर्वोक्तस्य कदस्य मध्ये । एतासा नाडीना प्रमाण कथयति—तत्रेति । इडा सव्यनासापर्यन्तम्, पिङ्गला दक्षिण-

सरस्वत्यूर्ध्वमाजिह्व गाधार्या पृष्ठतः स्थिता ।
आवामनेत्रमासव्यपादाङ्गुष्ठ तु सस्थिता ॥ १६० ॥
हस्तिजिह्वा सर्वगा तु वारुण्यथ यशस्विनी ।
आ ऽङ्गुष्ठाद्दक्षिणाङ्घ्रिस्था देहे विश्वोदरा ऽखिले ॥ १६१ ॥
शङ्खिनी सव्यकर्णान्त पूषा त्वा याम्यनेत्रत ।
पयस्विनी तु वितता दक्षिणश्रवणावधि ॥ १६२ ॥
अलम्बुसा पायुमूलमवष्टभ्य व्यवस्थिता ।
एवविधे तु देहे ऽस्मिन्मलसचयसवृते ॥ १६३ ॥
प्रसाधयन्ति धीमन्तो भुक्ति मुक्तिमुपायत ।
तत्र स्यात्सगुणाद्ध्यानाद्भुक्तिर्मुक्तिस्तु निर्गुणात् ॥ १६४ ॥
ध्यानमेकाग्रचित्तैकसाध्य न सुकर नृणाम् ।
तस्मादत्र सुखोपाय श्रीमन्नादमनाहतम् ॥ १६५ ॥
गुरूपदिष्टमार्गेण मुनयः समुपासते ।

नासापर्यन्तम्, कुहूर्मेहनपर्यन्तम्, सरस्वत्यूर्ध्व जिह्वापर्यन्तम्, गाधारी पृष्ठ-प्रदेशपर्यन्तम्, हस्तिजिह्वा वामनेत्रादारभ्य वामपादाङ्गुष्ठपर्यन्तम्, वारुणी सर्वप्रदेशे । यशस्विन्यङ्गुष्ठादारभ्य दक्षिणाङ्घ्रौ तिष्ठति, अखिले देहे विश्वोदरा । शङ्खिनी सव्यकर्णपर्यन्तम । पूषा ऽऽ दक्षिणनेत्रत । पयस्विनी दक्षिण-कर्णपर्यन्तम् । अलम्बुसा पायुमूल गुदमूलमवष्टभ्य स्थिता । पिण्डनिरूपण-मुपसहरति—एवविध इति । भुक्तिर्मुक्तिश्च देह उपायात्सिध्यत इत्युक्तम्, तयोरुपाय कथयति—तत्रेति । पूर्व सगुणोपासनोक्तिस्तु निर्गुणोपासना प्रति तस्या हेतुत्व सूचयितुम् । तथोक्त वेदान्तकल्पतरौ—

'निर्विशेष पर ब्रह्म साक्षात्कर्तुमनीश्वरा ।
ये मन्दास्ते ऽनुकम्प्यन्ते सविशेषनिरूपणै ॥' इति ।

सगुणनिर्गुणब्रह्मोपासनास्वसमर्था नादमुपासत इत्याह—ध्यानमिति । न सुकरम्,

सो ऽपि रक्तिविहीनत्वान्न मनोरञ्जको नृणाम् ॥ १६६ ॥
तस्मादाहतनादस्य श्रुत्यादिद्वारतो ऽखिलम् ।
गेय वितन्वतो लोकरञ्जन भवभञ्जनम् ॥ १६७ ॥
उत्पत्तिमभिधास्यामस्तथा श्रुत्यादिहेतुताम् ।

---

## अथ तृतीय नादस्थानश्रुतिस्वरजातिकुल-दैवतर्षिच्छन्दोरसप्रकरणम्

चैतन्य सर्वभूताना विवृत्त जगदात्मना ।
नादब्रह्म तदानन्दमद्वितीयमुपास्महे ॥ १ ॥

सुखेन कर्तुमशक्यम् । अनाहतो ऽपि नादो न जनमनोहर इत्याह —सो ऽपीति । पूर्वप्रकृतमुपसहरन्नुत्तरत्राभिधेय प्रतिजानीते—तस्मादिति । श्रुत्यादीत्यादिशब्देन स्वरग्राममूर्च्छनातानकूटतानादयो गृह्यन्ते, तद्द्वारतो ऽखिल गेय गानक्रियायोग्य जात्यादि वितन्वतो विस्तारयत आहतनादस्योत्पत्ति श्रुत्यादिहेतुत्व च वक्ष्याम इति सबन्ध । लोकरञ्जन भवभञ्जनमिति गेयस्य विशेषणद्वय भुक्तिमुक्तिप्रदत्व सूचयति, अन्यथा सगुणनिर्गुणब्रह्मोपासनाऽनुकल्पत्व नादोपासनाया नावकल्पेतेत्यर्थ ॥ -१६६—१६७- ॥

**इति प्रथमे स्वरगताध्याये द्वितीय पिण्डोत्पत्तिप्रकरणम् ॥ २ ॥**

---

(क०) शरीर निरूप्य शारीरनादादिप्रकरणमारभमाण श्रुत्यादिप्रपञ्चनिदानस्य नादस्य चैतन्यादिसाधर्म्येण ब्रह्मत्व रूपयित्वा तस्य परदेवतात्वमनुसधायोपास्ते—चैतन्यमिति । सर्वभूताना सकलप्राणिना चैतन्यम् ।

**नादोपासनया देवा ब्रह्मविष्णुमहेश्वरा ।**
**भवन्त्युपासिता नून यस्मादेते तदात्मका ॥ २ ॥**

नादो हि स्फोटात्मना समस्तपदार्थप्रकाशकत्वसाधर्म्येण चैतन्यारोपविषयत्वा चैतन्यम् । जगदात्मना परिदृश्यमानचराचरप्रपञ्चाकारेण विवृत्तमतत्त्वतो ऽन्यथाभूतम्, नादे श्रुतिवर्णादिसकलशब्दप्रपञ्चप्रतिभाससाधर्म्येण नाम-रूपोल्लिखितस्य जगतो ऽप्यधिष्ठानत्वारोपात् । आनन्दमभिव्यञ्जके ऽस्मिन्न भिव्यङ्ग्यानन्दरूपारोपात् । अद्वितीय स्वकार्यस्वरादिप्रपञ्चकारणत्वरूपेण ब्रह्मसाधर्म्येणैकत्वारोपात् । तदिति सर्वलोकप्रसिद्धम् । नादब्रह्म, नाद एव ब्रह्मेत्यभेदप्राधान्य आरोपविषयभूतनादानपह्नवे चैतन्याद्यवयवयुक्तत्वेन सम-स्तवस्तुविषय सावयवरूपकम् । उपास्मह इति 'अस्मदो द्वयोश्च' इति बहुवचनोपपत्ति । अयमभिसधि —परावाक्पर्यायस्य ब्रह्मशक्तेर्नादस्य ब्रह्मणो ऽत्यन्तप्रत्यासन्नत्वात्तदुपासनाया कृताया ब्रह्मप्राप्तिर्मणिप्रभाप्रवृत्तस्य मणिला-भवद्भवेदिति । तथा चोक्तम्—

'अतो गीतप्रपञ्चस्य श्रुत्यादेस्तत्त्वदर्शनात् ।
अपि स्यात्सच्चिदानन्दरूपिण परमात्मन ॥
प्राप्ति प्रभाप्रवृत्तस्य मणिलाभो यथा भवेत् ।
प्रत्यासन्नतया ऽत्यन्तम्'

इति, 'वीणावादन—' इत्यादि च । ननूपासनस्य सगुणेषु प्रसिद्ध-देवताऽन्तरेषु सत्स्वपि किमचेतनस्य नादस्य ब्रह्मत्वरूपेणोपासनमित्यत आह—**नादोपासनयेति** । तत्रोपपत्तिमाह—यस्मादेते तदात्मका इति । अत्र तदिति नादब्रह्म परामृश्यते । तस्मादभिन्ना यतो ऽत इत्यर्थ ॥ १, २ ॥

आत्मा विवक्षमाणो ऽय मनः प्रेरयते मन ।
देहस्थ वह्निमाहन्ति स प्रेरयति मारुतम् ॥ ३ ॥
ब्रह्मग्रन्थिस्थितः सो ऽथ क्रमादूर्ध्वपथे चरन् ।
नाभिहृत्कण्ठमूर्धास्येष्वाविर्भावयति ध्वनिम् ॥ ४ ॥
नादो ऽतिसूक्ष्म सूक्ष्मश्च पुष्टो ऽपुष्टश्च कृत्रिम ।
इति पञ्चाभिधा धत्ते पञ्चस्थानस्थितः क्रमात् ॥ ५ ॥
नकार प्राणनामान दकारमनल विदुः ।
जातः प्राणाग्निसयोगात्तेन नादो ऽभिधीयते ॥ ६ ॥

(सु०) एव श्रुत्यादिकारण पिण्ड निरूप्य श्रुतिस्वरादि निरूपयितुमिच्छु प्रकृतानुगुण मङ्गलमाचरति—चैतन्यमिति । नाद एव ब्रह्म नादब्रह्म, तदुपास्महे । सर्वभूताना चेतन्य चैतन्यफल वा, नादाभावे चेतनाना पाषाणादिभिरचेतनै को विशेष स्यात् ? ब्रह्मपक्षे सर्वभूताना चैतन्य ज्ञानम्, 'सत्य ज्ञानमनन्त ब्रह्म' इति श्रुते । जगदात्मना विवृत्तम्, जगति प्रसिद्धत्वान्नादस्य जगद्रूपेण विवृत्ततोच्यते । ब्रह्मपक्षे ऽप्रच्युतप्राच्यावस्थस्यासन्नानाकारावभासो विवर्त । एव ब्रह्मैव जगदाकारेण विवर्तत इत्यर्थ । आनन्द सुखसाधनम् । पक्षे सुख सुखरूपम्, 'आनन्दो ब्रह्मेति व्यजानात्' इति श्रुते । अद्वितीयमनुपम लोकोत्तरम् । पक्षे सजातीयविजातीयस्वगतभेदशून्यम् । अत्र श्लिष्टरूपकमलकार ॥ किमर्थं नाद उपास्यत इत्यत आह—नादोपासनयेति । ब्रह्मादयो देवा नादोपासनयोपासिता भवन्तीत्यत्र हेतुर्यस्मादेते तदात्मका इति । नादात्मका इत्यथ ॥ १, २ ॥

(क०) तस्य नादस्य नित्यत्वमङ्गीकृत्य तदभिव्यक्तिक्रममाह—**आत्मा विवक्षमाण** इत्यादिना । विवक्षमाण इति ब्रुव इच्छाया सनि तस्यार्धधातुकत्वाद् ब्रुवो वच्यादेशे 'पूर्ववत्सन' इति निमित्तातिदेशत्वादात्मनेपदित्वे रूपम् ॥ नाभ्यादिस्थानेष्वाविर्भूतस्य नादस्य क्रमेण

व्यपदेशभेदमाह—**नादो ऽतिसूक्ष्म** इति ॥ नादशब्दस्य योगतो निरुक्ति माह—**नकारमिति** । प्राणनामान प्राण इति नाम यस्यासौ प्राणना मा, तम् । एतेन मन्त्रशास्त्रानुसारतो बीजाक्षराणा तत्तद्देवतातादूप्या पत्त्या ऽत्र नकारदकारौ प्राणाग्नी इत्युक्त भवति । विदु , मान्त्रिका इति शेष । जात उदित , अभिव्यक्त इति यावत् । उक्तपञ्चविधनादस्याप्य विशेषेण गीतोपयोगित्वे प्राप्ते, हृत्कण्ठमूर्धस्थानेष्वेव श्रुतिपदनाडीसङ्गा वात्तत्रत्यस्यैव नादत्रयस्य गीतोपयोगित्वम् ॥ ३—६ ॥

(सु०) नादोत्पत्तिप्रकारमाह—**आत्मेति** । वक्तुमिच्छन्विवक्षमाण आत्मा मनो ऽन्त करण प्रेरयते । तदन्त करणमात्मप्रेरित सदेहस्थमुदर्यमग्निमाहन्ति ताडयति । स वह्निर्मारुत वायु प्रेरयति ॥ स पूर्व ब्रह्मग्रन्थिस्थितस्तेन वह्निना प्रेरित सन्नूर्ध्वमार्गे गच्छन्नाघातेन नाभिहृदयकण्ठमूर्धमुखेषु ध्वनि प्रकटयति। ऊर्ध्वपथ इति प्रकृतगानोपयोगार्थम्, अधो ऽप्यनाहतस्य नादस्योत्पत्ते , तदुक्तम्—

‘ कदस्थानसमुत्थो ऽपि समीर सचरन्नध ।
ऊर्ध्वं च कुरुते सर्वान्नादान्मूर्धनि तूद्गतान् ॥ ’

इति ॥ पञ्चविधस्य नादस्य सज्ञा कथयति—**नाद** इति । सूक्ष्मो ऽतिसूक्ष्म पुष्टो ऽपुष्ट कृत्रिम इत्ययमेव क्रमो ज्ञातव्य । ग्रन्थान्तरे तु पुष्टापुष्टयोर्व्यक्तो ऽव्यक्त इति नामनी । तथा चोक्त मतङ्गेन—

‘सूक्ष्मश्चैवातिसूक्ष्मश्च व्यक्तो ऽव्यक्तश्च कृत्रिम ।
सूक्ष्मनादो गुहावासी हृदये चातिसूक्ष्मक ॥
कण्ठमध्यस्थितो व्यक्तश्चाव्यक्तस्तालुदेशग ।
कृत्रिमो मुखदेशे तु ज्ञेय पञ्चविधो बुधै ॥ ’

इति ॥ नादशब्दव्युत्पत्तिं कथयति—**नकारमिति** । नामलिङ्गानुशासनविदो नकार प्राणनामान विदुदकार चाग्निम् । नदाभ्या जात इत्यणप्रत्यये जाते,

**व्यवहारे त्वसौ त्रेधा हृदि मन्द्रो ऽभिधीयते ।**
**कण्ठे मध्यो मूर्ध्नि तारो द्विगुणश्चोत्तरोत्तर ॥ ७ ॥**

आदिवृद्धौ च नाद इति रूप सिध्यति । मतङ्गेन तु नद्यत इति नाद इति व्युत्पत्तिर्दर्शिता । तथा चोक्तम्—

'नकार प्राण इत्याहुर्दकारश्चानलो मत ।
नादस्य हि पदार्थो ऽय समीचीनो मयोदित ।
नादो ऽय नदतेर्धातो स च पञ्चविधो भवेत् ॥'

इति ॥ ३–६ ॥

(क०) नामान्तराणि स्वरूपभेद चाह—**व्यवहारे त्विति**। व्यवह्रियत इति व्यवहारो गीतम्, तस्मिन् । तु पक्ष व्यावर्तयति । नाभ्यास्यस्थानयोर्नैवमित्यर्थ । **द्विगुणश्चोत्तरोत्तर** इति । उत्तरोत्तर , मन्द्रादुत्तरो मध्यो मध्यादुत्तरस्तार इति यावत् । द्विगुण , गुण उच्चारणप्रयत्न , द्वौ गुणौ यस्येति द्विगुण । अयमर्थ —मन्द्रस्थानस्थितात्षड्जादिव्यपदेशवतो नादान्मध्यस्थानस्थित स एव षड्जादिव्यपदेशवास्ततो ऽपि द्विगुणप्रयत्नसाध्यत्वाद् द्विगुण इति । पूर्वस्थानस्थितात्क्रमेणारोहे सत्यष्टम स्वर इति यावत् । अत्रासाविति नादसामान्यनिर्देशे ऽपि व्यवहारानुपयोगात्स्वररूपनादाद् द्वैगुण्य विवक्षितम् । श्रुतिरूपनादविवक्षाया तु त्रयोविशो द्विगुण ॥ ७ ॥

(सु०) त्रिविधस्य नादस्य व्यवहारयोग्यत्व कथयति—**व्यवहारे त्विति**। व्यवहारे गानव्यवहारे, घटपटाद्यभिधानव्यवहारे तु मुखोत्पन्नस्यापि ध्वनेरुपयोगित्वात् । हृदि य उत्पद्यते नाद स मन्द्र इति कथ्यते, यस्तु कण्ठ उत्पद्यते स मध्य , यस्तु मूर्ध्नि स तार । एषा मान कथयति—**द्विगुण** इति । यावान्मन्द्रस्ततो द्विगुणो मध्य , यावान्मध्यस्ततो द्विगुणस्तार । तदुक्त सगीतसमयसारे—

'त्रीणि स्थानानि हृत्कण्ठशिरासीति समासत ।
एकैकमपि तेषु स्याद् द्वाविशतिविधायुतम् ॥

**तस्य द्वाविंशतिर्भेदा श्रवणाच्छ्रुतयो मता ।**
**हृद्यूर्ध्वनाडीसलग्ना नाड्यो द्वाविंशतिर्मता: ॥ ८ ॥**
**तिरश्च्यस्तासु तावत्य: श्रुतयो मारुताहते: ।**
**उच्चोच्चतरतायुक्ता: प्रभवन्त्युत्तरोत्तरम् ॥ ९ ॥**
**एव कण्ठे तथा शीर्षे श्रुतिद्वाविंशतिर्मता ।**

द्वाविंशतिविधो मन्द्रो ध्वनि सजायते हृदि ।
यथोत्तरमसौ नादो वीणायामधरोत्तरम् ॥
स एव द्विगुणो मध्य कण्ठस्थाने यथाक्रमम् ।
स एव मस्तके तार स्यान्मध्याद् द्विगुण क्रमात् ॥
इति स्वरगता ज्ञेया श्रुतय श्रुतिवेदिभि ।
अन्तरस्वरवर्तिन्यो ह्यन्तरश्रुतयो मता ॥'

इति ॥ ७ ॥

(क०) स्थानान्युक्त्वा क्रमप्राप्ता श्रुतीर्नादभेदत्वेनाह—**तस्येति** । तस्यैकैकस्थानाविर्भूतस्य नादस्य । सामान्यविवक्षयैकत्वम् । द्वाविंशतिर्भेदा अभिव्यञ्जकनाडीभेदवशात् । श्रवणाच्छ्रवणयोग्यत्वात् । श्रुतय , श्रूयन्त इति व्युत्पत्त्या । एतदुक्त भवति—यद्यपि श्रवणयोग्यत्वमनुरणनात्मन स्वरतानादिरूपेण दीर्घदीर्घस्यापि ध्वनेर्विद्यते, तथाऽप्यत्र मारुताद्याहत्य-नन्तरोत्पन्नप्रथमक्षणवर्तिश्रवणमात्रयोग्यध्वनेरेव श्रुतित्वमिति । तत्र मन्द्रस्थाने श्रुतिभेदजनकनाडीना सनिवेशमाह—**हृदीति** । ऊर्ध्वनाड्याविडापिङ्गले, तयो सलग्ना नाड्य सच्छिद्रा नाडिका, तासु नाडीषूत्तरोत्तरमुच्चोच्चतर तायुक्ता । उच्चा चोच्चतरा चोच्चोच्चतरे, तयोर्भावावुच्चोच्चतरते, ताभ्या युक्ता श्रुतय प्रभवन्ति । अयमर्थ—मन्द्रस्थाने प्रथमनाड्युत्पन्ना श्रुति-रतिनीचा । तदपेक्षया द्वितीयातृतीययो श्रुत्योरुच्चोच्चतरते । तत्र द्वितीयाया

उच्चायास्तृतीया किञ्चिदुच्चेति तरप्प्रयोग । एव तृतीयाचतुर्थ्यादिषु श्रुतिषु द्वयोर्द्वयोर्द्रष्टव्यमिति ॥ एव प्रथमस्थानोक्तमर्थमुत्तरोत्तरस्थानद्वये ऽप्यतिदिशति—**एव कण्ठ** इति ॥ ८—९- ॥

(सु०) तस्य नादस्य भेदान्कथयति—तस्येति । तस्य नादस्य द्वाविंशतिसख्याका भेदा भवन्ति । ते च श्रुतिसज्ञयोच्यन्ते । तत्र व्युत्पत्तिं कथयति—श्रवणादिति । श्रूयन्त इति श्रुतय इत्यर्थ । तथा चोक्त मतङ्गेन—

'श्रवणार्थस्य धातो क्तिन्प्रत्यये च सुसश्रिते ।
श्रुतिशब्द प्रसाध्यो ऽय शब्दज्ञै कर्मसाधन ॥'

इति । तत्र श्रुतेरेकत्वानेकत्वविषये महती विप्रतिपत्ति । देहाकाशपवनसयोगात् पुरुषप्रयत्नप्रेरितो ध्वनिर्नाभेरूर्ध्वमाकाशदेशमाक्रामन्धूमवत्सोपानपदावस्थान पवनेच्छया ऽनेकधा ऽऽरोहन्नन्तर्भूतपूरणप्रत्ययार्थतया चतु श्रुतित्वादिभेदभिन्नो ऽवभासत इति मतङ्ग । विश्वावसुस्तु द्वैविध्य श्रुतेरुक्तवान् । तथा चाह—

'श्रवणेन्द्रियग्राह्यत्वाद्ध्वनिरेव श्रुतिर्भवेत् ।
सा चैका द्विविधा ज्ञेया स्वरान्तरविभागत ॥
नियतश्रुतिसस्थातो गीयन्ते सप्त गीतिषु ।
तस्मात्स्वरगता ज्ञेया श्रुतय श्रुतिवेदिभि ॥
अन्तरस्वरवर्तिन्यो ह्यन्तरश्रुतयो मता ।'

इति । केचित्स्थानत्रययोगाच्छ्रुतीना त्रैविध्य प्रतिपद्यन्ते । केचिद् द्वाविशति श्रुतीराहु । केचित्षट्षष्टिम् । अन्य आनन्त्यम् । तथा चाह कोहल —

'द्वाविंशतिं केचिदुदाहरन्ति श्रुती श्रुतिज्ञानविचारदक्षा ।
षट्षष्टिभिन्ना खलु केचिदासामानन्त्यमन्ये प्रतिपादयन्ति ॥'

इति । तत्र मन्दतीव्रतीव्रतरादितारतम्याख्यविरुद्धधर्मससर्गस्य विद्यमानत्वाद्भेदस्तावत्सिद्ध । तदुक्तम्—'अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यास कारणभेदश्च' इति । मन्द्रमध्यतारस्थानेष्वपि ता एवैता श्रुतयस्त एवामी स्वरा इति प्रत्यभिज्ञानाद्भेदस्यासिद्धि , तस्माद् द्वाविंशतिश्रुतिपक्ष एव समीचीन

व्यक्तये कुर्महे तासा वीणाद्वद्वे निदर्शनम् ॥ १० ॥
द्वे वीणे सदृशौ कार्ये यथा नादः समो भवेत् ।
तयोर्द्वाविंशतिस्तन्त्र्यः प्रत्येक तासु चादिमा ॥ ११ ॥
कार्या मन्द्रतमध्वाना द्वितीयोच्चध्वनिर्मनाक् ।
स्यान्निरन्तरता श्रुत्योर्मध्ये ध्वन्यन्तराश्रुते ॥ १२ ॥

इति मत्वा द्वाविंशतिरित्युक्तवान् । सख्यानियमे कारणमाह—हृदीति । हृदि, ऊर्ध्वनाडी सुषुम्णा, तत्सलग्ना, तिरश्चयस्तिर्यक्स्थिता द्वाविंशतिर्नाड्य । तासु मारुतसबन्धात्तावन्त एव नादा उत्पद्यन्ते । तेषु विरुद्धधर्मसमर्ग दर्शयति—उच्चेति । उत्तरोत्तरमुच्चोच्चतरतायुक्ता । प्रथमो नादो हीनतम, ततो ऽनन्तरमुच्च, ततो ऽनन्तरमुच्चतर, ततो ऽनन्तरमुच्चतम इत्यर्थ । हृदय उक्त श्रुत्युत्पत्तिप्रकार कण्ठशीर्षयोरतिदिशति—एवमिति ॥ ८–९- ॥

(क०) शरीरे प्रतिस्थानमुक्तसख्याकनाडीसनिवेशस्य तत्र श्रुत्युत्पादस्य च परोक्षत्वात्तत्तत्सद्भावे सदेह स्यादिति तन्निरासार्थ प्रत्यक्षत सवादयितु प्रतिज्ञाय निर्दिशति—**व्यक्तय** इत्यादिना । सदृशौ सदृशाकारे । यथा नाद समो भवेदिति । यथा सदृशाकारयो कृतयोर्नाद समो भवेत्तथा सदृशौ कार्ये । नादसाम्ये लाघवादिविशिष्टाकारसाम्य निमित्तमित्यर्थ । **तासु चेति** । वीणयो प्रत्येक द्वाविंशतौ तन्त्रीषु । चकारो द्वितीयवीणागततन्त्रीसमुच्चयार्थ । आदिमा प्रथमा तन्त्री । कर्त्रपेक्षया सनिहितेत्यर्थ । मन्द्रतमध्वाना ऽतिमन्द्रस्वना, उत्तरोत्तराऽपेक्षया पूर्वपूर्वस्या मन्द्रत्वे सभवत्यपि सर्वापेक्षयेय मन्द्रेति तमप्प्रयोग । अतिमन्द्रस्वनत्व च तन्त्र्या अतिशिथिलीकरणेन भवति । ततो ऽपि शिथिलीकरणे यथा ऽनुरणनध्वन्यसभवस्तथा कार्येत्यर्थ । द्वितीया तन्त्रीर्मनागुच्चध्वनि कार्या । मनागुच्चध्वनित्वस्यैव व्यवस्थापकम्—**स्यान्निरन्तरतेति** । श्रुत्यो पूर्वोत्तर-

अधराधरतीव्रास्तास्तज्जो नादः श्रुतिर्मतः ।
वीणाद्वये स्वराः स्थाप्यास्तत्र षड्जश्चतु श्रुति ॥ १३ ॥

तन्त्र्युत्पन्नयोर्मध्ये ध्वन्यन्तराश्रुतेर्ध्वन्यन्तरस्य पूर्वोत्तरश्रुतिविलक्षणस्य पूर्वश्रुते किचिदुच्चस्योत्तरश्रुते किचिन्नीचस्य चान्यध्वनेरश्रुतिरश्रवणम् । अश्रुतेरिति हेतौ पञ्चमी । मध्यगतध्वन्यन्तराश्रवण निमित्तीकृत्य श्रुत्योर्निरन्तरता यथा स्यात्तथा तन्त्री किचिद् दृढीकरणेन मनागुच्चध्वनि कार्येत्यर्थ । अत्र नैरन्तर्य ध्वन्योरेवोक्त न तु तन्त्र्योर्दण्डादिप्रदेशस्थयो । अतस्तन्त्र्योर्दण्डादिषु मध्ये ऽवकाशो दृश्यत इति तत्र ध्वन्यन्तरसभवो न शङ्कनीय । द्वितीयेत्युपलक्षणम् । तेन तृतीयाऽऽदयो ऽपि द्वितीयाऽऽद्यपेक्षया किचित्किचिद् दृढीकरणेन मनागुच्चध्वनय कार्या इत्यर्थ । एव कृते तास्तन्त्र्यो ऽधराधरतीव्रा उच्चोच्चध्वनयो भवन्ति । यथा शरीरे श्रुतय उत्तरोत्तरोच्चा उत्पद्यन्ते तथा वीणायामधराधरोच्चा उत्पद्यन्त इति बोद्धव्यम् । तज्ज, तासु तन्त्रीष्वाहत्योत्पन्नो नाद श्रुतित्वेन मत । अत्र श्रुतिशब्दनिरुक्तिपूर्वक श्रुत्येकत्वादिविषयविकल्पे मतङ्गो मतभेदानदर्शयत् । तद्यथा—

'श्रवणार्थस्य धातो क्तिन्प्रत्यये च सुसश्रिते ।
श्रुतिशब्द प्रसाध्यो ऽय शब्दज्ञै कर्मसाधन ॥'

श्रूयत इति श्रुति । सा चैका ऽनेका वा । एकैव श्रुतिरिति । तद्यथा—तत्रादौ तावद्देहाकाशपवनसयोगात्पुरुषप्रयत्नप्रेरितो ध्वनिर्नाभेरूर्ध्वमाकाशदेशमाक्रामन्धूमवत्सोपानपदक्रमेण पवनेच्छया ऽनेकधा ऽऽरोहन्नन्तर्भूतपूरणप्रत्ययार्थतया चतु श्रुत्यादिभेदभिन्न प्रतिभासत इति मामकीन मतम् । अन्ये तु पुनर्द्विप्रकारा श्रुतिं मन्यन्ते । कथम् ? स्वरान्तरविभागात् । तथा चाह विश्वावसु —

**स्थाप्यस्तन्त्र्या तुरीयायामृषभस्त्रिश्रुतिस्ततः ।**
**पञ्चमीतस्तृतीयाया गाधारो द्विश्रुतिस्ततः ॥ १४ ॥**

'श्रवणेन्द्रियग्राह्यत्वाद् ध्वनिरेव श्रुतिर्भवेत् ।
सा चैका द्विविधा ज्ञेया स्वरान्तरविभागत ॥
नियतश्रुतिसस्थानाद् गीयन्ते सप्त गीतिषु ।
तस्मात्स्वरगता ज्ञेया श्रुतय श्रुतिवेदिभि ॥'

शुद्धस्वररूपा इत्यर्थ ।

'अन्तरस्वरवर्तिन्यो ह्यन्तरश्रुतयो मता ।'

विकृतस्वररूपा इत्यर्थ । प्रयोगबहुलत्वापेक्षया श्रुतय इति बहुवचननिर्देश ।

'एतासामपि वैस्वर्य क्रियाग्रामविभागत ॥' इति ।

केचित्स्थानत्रययोगात्त्रिविधा श्रुति मन्वते । अन्ये त्विन्द्रियवैगुण्यात्त्रिविधा श्रुति मन्यन्ते । इन्द्रियवैगुण्य च त्रिविध सहज दोषजमभिघातज चेति । अत्रेन्द्रिय मन । तत्र सत्त्वगुणयुक्त सहजम्, रजस्तमोयुक्त दोषजम्, अम्लादिरसोपहतमभिघातजमित्यर्थ । अपरे तु वातपित्तकफसनिपात भेदभिन्ना चतुर्विधा श्रुति प्रतिपेदिरे । तथा चाह तुम्बुरु —

'उच्चैस्तरो ध्वनी रूक्षो विज्ञेयो वातजो बुधै ।
गम्भीरो घनलीनस्तु ज्ञेयो ऽसौ पित्तजो ध्वनि ॥
स्निग्धश्च सुकुमारश्च मधुर कफजो ध्वनि ।
त्रयाणा गुणसयुक्तो विज्ञेय सनिपातज ॥'

इति । एते तु शब्दभेदत्वेन वक्ष्यन्ते । अपरे तु वेण्वादयो मुनयो नवविधा श्रुतिं मन्यन्ते । तथा हि—

अष्टमीतो द्वितीयाया मध्यमो ऽथ चतुःश्रुतिः ।
दशमीतश्चतुर्थ्या स्यात्पञ्चमो ऽथ चतुःश्रुति॰ ॥ १५ ॥
चतुर्दशीतस्तुर्याया धैवतस्त्रिश्रुतिस्तत ।

'द्विश्रुतिस्त्रिश्रुतिश्चैव चतु श्रुतिक एव च ।
स्वरप्रयोग कर्तव्यो वशच्छिद्रगतो बुधै ॥'

इति । भरतेनाप्युक्तम्—

'द्विकत्रिकचतुष्कास्तु ज्ञेया वशगता स्वरा ।
कम्पमानार्धमुक्ताश्च व्यक्तमुक्ताङ्गुलिस्वरा ॥
इति तावन्मया प्रोक्ता समीच्य श्रुतयो नव ।'

इति । एतानि षण्मतानि स्वरश्रुत्योरभेदमङ्गीकृत्य प्रवर्तितानीति मन्तव्यम् । तानि त्वभिव्यङ्ग्यत्वाभिव्यञ्जकत्वाभ्या साक्षाद्भिन्नरूपयो स्वरश्रुत्योर्भेदापह्नवान्न समीचीनानि । अत्र केचिन्मीमासामासलितधियो धीरा द्वाविंशतिं श्रुतीर्मन्यन्ते । केचित्पुन षट्षष्टिभेदभिन्ना श्रुतय इति वदन्ति । अन्ये पुनरानन्त्य वर्णयन्ति श्रुतीनाम् । तथा चाह कोहल —

'द्वाविंशतिं केचिदुदाहरन्ति श्रुती श्रुतिज्ञानविचारदक्षा ।
षट्षष्टिभिन्ना खलु केचिदासामानन्त्यमन्ये प्रतिपादयन्ति ॥'

इति । तत्र,

'आनन्त्य हि श्रुतीना च सूचयन्ति विपश्चित ।
यथा ध्वनिविशेषाणामानन्त्य गगनोदरे ॥
उत्तालपवनोद्वेलजलराशिसमुद्भवा ।
इयत्ता प्रतिपद्यन्ते न तरङ्गपरपरा ॥'

**अष्टादश्यास्तृतीयाया निषादो द्विश्रुतिस्ततः ॥ १६ ॥**
**एकविंश्या द्वितीयाया वीणैका ऽत्र ध्रुवा भवेत् ।**

इति श्रुतीनामानन्त्य दर्शितमिति । अस्मिन्पक्षे रणनानुरणनात्मकयो श्रुतिस्वरयोर्भेदाङ्गीकारे ऽप्यनुरणनरूपाणामपि ध्वनीना श्रुतित्वमभिधायो भयेषामपि वीचीतरङ्गन्यायेनोत्पद्यमानाना तेषामतिसूक्ष्मभागकल्पनया प्रति ध्वन्यवयवभूतध्वनिबहुत्वविवक्षया ऽऽनन्त्य दर्शितम् । तदनुपपन्नमिति मन्तव्यम् । यद्यपि श्रवणयोग्यस्य ध्वनेरिन्द्रियग्राह्यत्वाक्षिप्तेन सावयवत्वेन त्रसरेणुवदवयवा सन्ति, तथा ऽपि तेषा श्रोत्रप्रत्यक्षमूलेनानुमानेनार्थापत्त्या वा ऽन्यतरेणैव त्रसरेणुगतपरमाणुवद्गम्यतया श्रोत्रग्राह्यत्वाभावात् स्वत स्वराभिव्यक्तिहेतुत्वाभावेनाश्रुतित्वादिति । द्वाविंशतिश्रुतिपक्षे षट्-षष्टिश्रुतिपक्षे च यद्यपि श्रुतिस्वरयोर्भेदाङ्गीकार समान एव, तथा ऽपि द्वाविंशतिश्रुतिपक्षे द्वाविशति श्रुतय एव मन्द्रस्था स्थानान्तरयोरपि द्विगुणद्विगुणत्वेनावर्त्यन्त इति । षट्षष्टिश्रुतिपक्षे तु तावत्य एव श्रुतय स्थानत्रये ऽप्यनावृत्ता परस्पर भिन्ना इति च वैषम्यम् । तत्रा-नावृत्तिपक्षस्वीकारे षड्जादीनामपि स्वराणामावृत्त्यभावान्मध्यतारस्थाश्च-तुर्दश स्वरा पृथग्व्यपदेशभाजो भवेयु । नैव तथा व्यवहार । अत एव मतङ्गादिदर्शितेषु नवसु पक्षेषु द्वाविशतिश्रुतिपक्षमेव रणनानुरणनात्मना साक्षादनुभूयमानश्रुतिस्वरभेदानपह्नवेनावृत्त्या सप्तानामेव स्वराणा गुणभिन्नाना व्यवहारोपयोगित्वसिद्धेश्च सारतम निश्चित्य नि शङ्को वीणयोर्निदर्शिताना तासा द्वाविशतिश्रुतीना मध्ये चतुर्थीप्रभृतिषु शास्त्रानुसारेण पूर्वोत्तरावधि प्रदर्शनपूर्वक षड्जादिसप्तस्वरस्थापन विदधाति—**वीणाद्वय** इत्यादिना । **चतु श्रुतिरिति** । स्वाभिव्यक्तिकरणत्वेन चतस्र श्रुतयो यस्येति स तथोक्त । एव त्रिश्रुतिरित्यादौ द्रष्टव्यम् ॥ -१०—१६- ॥

(सु०) दृष्टान्तेन विनैते नादविशेषा दुरवबोधा, कण्ठे ऽपि दर्शयितुमशक्या, तस्माद्वीणाद्वद्वे दृष्टान्तकथन प्रतिजानीते—व्यक्तय इति। ता प्राकट्येन दर्शयितुमित्यर्थ । तदुक्त सगीतसमयसारे—

'ते तु द्वाविंशतिर्नादा न कण्ठेन परिस्फुटा ।
शक्या दर्शयितु तस्माद्वीणाया तन्निदर्शनम् ॥'

इति। प्रतिज्ञातमर्थ कथयति—द्वे वीणे इति। सदृशौ समाने। आकारसाम्य नात्रोपयुज्यत इत्याह—यथा नाद समान एव भवतीति। तदुक्तम्—

'द्वे वीणे तुलिते कार्ये समस्तावयवैस्तथा ।
एकवीणेव भासेते यथा द्वे अपि शृण्वताम् ॥'

इति। तयो प्रत्येक द्वाविंशतिस्तन्त्र्य स्थापनीया। तास्वाद्या मन्द्रतमध्वाना कर्तव्या। स मन्द्रतमो यस्माद्धीनो मन्द्रो ऽन्यो नादो रञ्जको न निष्पद्यते। द्वितीया तस्या सकाशान्मनाक्किंचिदुच्चध्वनि । किंचिदित्यनेनैवोक्तमर्थ विशदयति—मध्ये ध्वन्यन्तराश्रुतेरिति। यथा मध्ये विसदृश ध्वन्यन्तर नोत्पद्यते तथा नैरन्तर्य विधेयम्। तदुक्तम्—

'द्वितीया तु ततस्तीव्रध्वनिस्तन्त्रीर्विधीयते ।
यथा यथा तयोर्मध्ये न तृतीया ध्वनिर्भवेत् ॥'

इति। तास्तन्त्र्यो ऽधोऽध स्थातस्तीव्रनादा भवन्ति। ताभ्यस्तन्त्रीभ्यो जातो नाद श्रुतिरित्युच्यते। श्रुते प्रमाणमुक्त मतङ्गेन—ननु श्रुते किं मानम्? उच्यते, पञ्चमस्तावद् ग्रामद्वयस्थो लोके प्रसिद्ध । [1]तस्योत्कर्षापकर्षाभ्या मार्दवादायतत्वाद्वा यदन्तर तत्प्रमाणा श्रुतिरिति। स्थानत्रये षट्षष्टिसख्याकाना श्रुतीना नामान्युक्तानि सगीतसमयसारे—

'मन्द्रा चैवातिमन्द्रा च घोरा घोरतरा तथा ।
मण्डना च तथा सौम्या सुमना पुष्करा तथा ॥
शङ्खिनी चैव नीला च उत्पला चानुनासिका ।
घोषावती लीननादा आवर्तन्यपि चापरा ॥

[1] तस्य श्रुत्युत्कर्षापकर्षाभ्या

**चलवीणा द्वितीया तु तस्या तन्त्रीस्तु सारयेत् ॥ १७ ॥**
**स्वोपान्त्यतन्त्रीमानेयास्तस्या सप्त स्वरा बुधैः ।**

रणदा चैव गम्भीरा दीर्घतारा च नादिनी ।
मन्द्रजा सुप्रसन्ना च निनदा मन्द्रसप्तके ॥
नादान्ता निष्कला गूढा सकला मधुरा गली ।
एकाक्षरा भृङ्गजाती रसगीती सुरञ्जिका ॥
पूर्णा ऽलकारिणी चैव वाशिका वैणिका तथा ।
त्रिस्थाना सुस्वरा सौम्या भाषाऽङ्गी वार्त्तिका तथा ॥
सपूर्णा च प्रसन्ना च सर्वव्यापनिका तथा ।
द्वाविशति समाख्याता श्रुतयो मध्यसप्तके ॥
ईश्वरी चैव कौमारी सवराली तथा परा ।
भोगवीर्या मनोरामा सुस्निग्धा च तथा परा ॥
दिव्याङ्गा ऽथो सुललिता विद्रुमा च तथा परा ।
महार्का शङ्किनी राका लज्जा चैव तथा परा ॥
काली सूक्ष्मा ऽतिसूक्ष्मा च पुष्टा चैव सुपुष्टिका ।
विस्पष्टा काकली चैव कराली च तथा परा ॥
विस्फोटान्तर्भेदिनी च इत्येतास्तारसप्तके ।'

इति । श्रुतिभ्य स्वरोत्पत्तिप्रकार कथयति—वीणाद्वय इति । वीणाद्वये स्वरा स्थापनीया । तत्र चतस्र श्रुतयो यस्य सबन्धिन्य स चतु श्रुति षड्जस्तुरीयाया चतुर्थ्या तन्त्र्या स्थाप्य । त्रिश्रुतिर्ऋषभ सप्तम्याम् । द्विश्रुतिर्गांधारो नवम्याम् । चतु श्रुतिर्मध्यमस्त्रयोदश्याम् । चतु श्रुति पञ्चम सप्तदश्याम् । त्रिश्रुतिर्धैवतो विशतितम्याम् । द्विश्रुतिर्निषादो द्वाविश्याम् ॥ -१०-१६- ॥

(क०) अत्र वीणयो । एका ध्रुवा भवेदिति । अनयोश्चलत्वध्रुवत्वे सारणाऽन्वयव्यतिरेकानुविधायिनी । द्वितीयेति । ध्रुवत्वेन कल्पिताया अन्येत्यर्थ । अत्र तुशब्दो व्यपदेशान्तरपरिग्रहार्थ । श्रुतिगतेयत्तापरिज्ञानार्थं

**ध्रुववीणास्वरेभ्यो ऽस्या चलाया ते स्वरास्तदा ॥ १८ ॥**
**एकश्रुत्यपकृष्टाः स्युरेवमन्या ऽपि सारणा[1] ।**

चलवीणाया सारणा विदधाति—**तस्यामिति** । तन्त्रीस्तु सारयेदिति । तुशब्दो भिन्नक्रम । तस्या त्विति योजना ध्रुवातो वैषम्यप्रदर्शनार्था । सारयेत्सारणा कुर्यात्, स्वस्वतन्त्रीस्थितान्स्वराम्तत्तच्छ्रुतिस्थानात्प्रच्याव्य श्रुत्यन्तराणि तन्त्री प्रापयेदित्यर्थ ॥ सारयेदित्यनेनानियमेन श्रुत्यन्तर-प्रापणे प्राप्ते, प्रथमादिसारणासु श्रुत्यन्तरनियममाह—**स्वोपान्त्येति** । तस्या प्रथमाया सारणायाम् । ननु श्रुत्यन्तरप्राप्त्या स्वरान्तरत्व किं न स्यादित्यत आह—ध्रुववीणास्वरेभ्य इति । ते स्वराम्तदैकश्रुत्यपकृष्टा स्युरित्यत्र त इति ध्रुवायामिव चतु श्रुतिकत्वादिलक्षणाना षडजादीना परामर्शाच्छ्रुत्यन्तर-प्राप्त्या स्वरान्तरत्वप्राप्तावप्येकश्रुत्यपकर्षेण तेषामेव नीचत्वमात्रप्रतीतेर्विशेष लाभाभावात्स्वरान्तरत्व न स्यादित्यर्थ । उक्त प्रकार सारणाऽन्तरे ऽप्यति दिशति—**एवमिति** । पूर्वत्र सारणायामेकश्रुत्यपकृष्टान्स्वरान्प्रकृतिं कृत्वा तेषा ततो ऽप्युपान्त्यतन्त्र्यानयनमिहान्यशब्दार्थ ॥ -१७—१८ ॥

(सु०) अत्र वीणाद्वय एका चलवीणैका ध्रुववीणा । यस्या स्वरा स्वस्थान परित्यज्यापकृष्यन्ते सा चलवीणा, यस्या तु नापकृष्यन्ते सा ध्रुववीणा । श्रुतिनिश्चयार्थ चलवीणाया यत्कर्तव्य तदाह—तस्यामिति । तस्या चलवीणाया तन्त्री सारयेदपकर्षयेत् । प्रथमसारणाप्रकारमाह—स्वोपान्त्येति । तस्या चल-वीणाया सप्तापि स्वरा यत्र स्थापितास्ता अन्त्यास्तन्त्र्य, तत्समीपवर्तिन्यो ऽपकृष्टा उपान्त्या, तासु सप्त स्वरा आनेया स्थापनीया । एव प्रथमसारणाया कृताया किं स्यात्? तदाह—ध्रुववीणेति । अस्या चलाया चलवीणाया ते षड्जादय स्वरा ध्रुववीणास्वरेभ्यस्तदपेक्षयैकश्रुत्या ऽपकृष्टा स्यु । एवमेव

[1] ०मन्याश्च सारणा

श्रुतिद्वयलयादस्या चलवीणागतौ गनी ॥ १९ ॥
ध्रुववीणोपगतयो रिधयोर्विशतः क्रमात् ।
तृतीयस्या सारणाया विशतः सपयो रिधौ ॥ २० ॥
निगमेषु चतुर्थ्या तु विशन्ति समपाः क्रमात् ।
श्रुतिद्वाविंशतावेव सारणाना चतुष्टयात् ॥ २१ ॥

द्वितीयतृतीयचतुर्थ्य सारणा कर्तव्या इत्याह—एवमिति । प्रतिसारण स्वराणा ततो ऽपि पुनरेकैकश्रुत्यपकर्ष कर्तव्य ॥ १७–१८- ॥

(क०) द्वितीयादिषु सारणासु ज्ञेय दर्शयति—**श्रुतिद्वयेत्य** दिना । अस्या द्वितीयसारणाया चलवीणागतौ चलवीणाया स्वस्वोपान्त्यतन्त्रीस्थितौ गनी गाधारनिषादौ ध्रुववीणोपगतयोर्ध्रुववीणाया स्वस्वाधारश्रुतिस्थयो रिधयो-र्ऋषभधैवतयो क्रमादृषभे गांधारो धैवते निषादश्च श्रुतिद्वयलयात्प्रातिस्विक श्रुतिद्वयपरित्यागाद्विशतो लीनौ भवत । ध्वनिसाम्यादेकाकारता भजत इति यावत् । एव तृतीयचतुर्थसारणयोरपि स्वरान्तरप्रवेशो द्रष्टव्य । ननु चतुर्थसारणाया मन्द्रषड्जस्य निषादे प्रवेश उच्यत, तत्कथमुप-पद्यते ? 'कार्या मन्द्रतमध्वाना' इति षड्जादिमश्रुतेरारम्भात्तत्पूर्वध्वन्य-सभवेनोपान्त्यतन्त्र्यभावात् । सत्य ध्वन्यसभवात्तन्त्र्यभाव , तथा ऽपि मन्द्रस्वरसप्तकस्यावृत्तौ षडजनिषादयो सनिधानान्निषादाधारश्रुतेरुपान्त्यत्व कल्पयित्वा प्रवेश पर्यवस्यतीत्युपपन्नम् । अथ वा, स्थानान्तरावृत्तस्य तस्यैव षड्जस्य पूर्व निषादसभवात्तस्मिन्प्रवेशो द्रष्टव्य । सारणाना फलमाह—**श्रुतिद्वाविंशता**विति । यद्येव स्यादेतदनावृत्तिमतानुसारेण सार णापञ्चकेनापि सप्तानामपि स्वराणामेकोनत्रिंशच्छ्रुतीयत्तानिश्चय कर्तुं शक्यत इति । नैवम् । स्वरास्तावच्छ्रुत्यनुरणनात्मका । ते च षड्जादयो

**ध्रुवाश्रुतिषु लीनायामियत्ता ज्ञायते स्फुटम् ।**
**अतः पर तु रक्तिघ्न न कार्यमपकर्षणम् ॥ २२ ॥**
**श्रुतिभ्यः स्युः स्वराः षड्जर्षभगाधारमध्यमाः ।**

लोके शास्त्रे च चतुर्थ्यादिश्रुतिषु मयूरादिस्वरसवादित्वेनाभिव्यक्ता सिद्धा । तेषा तदुक्तरीत्योत्कर्षणेन पञ्चम्यादिषु श्रुतिषु प्रापणे कृते तादृशानुरणनाभावान्मन्द्रमध्ययोरुत्तरोत्तरस्थानाक्रमणे तारमन्द्रव्यवस्थितेर-पायाच्च यतो रक्तिघात , अत सारणाऽन्तर न कर्तव्यमित्यभिसधायो-क्तम्—**अत पर त्विति** ॥ -१९–२२ ॥

(सु०) द्वितीयसारणाया कृताया यत्सिध्यति तदाह—**श्रुतिद्वयेति** । अस्या चलवीणाया द्वितीयसारणाया कृताया श्रुतिद्वयस्य लयादपकर्षाच्चलवीणाया वर्तमानौ गाधारनिषादौ ध्रुववीणागतयोर्ऋषभधैवतयो प्रविशत । **क्रमादिति** । गाधार ऋषभ निषादो धैवतमित्यर्थ । तयो प्रविशत इति तत्समाननादौ भवत इत्यर्थ । तृतीयसारणाया सिद्ध कथयति—**तृतीयस्यामिति** । सपयो षड्जपञ्चमयोर्ऋषभधैवतौ विशत । ऋषभ षड्ज प्रविशति, धैवत पञ्चम प्रविशति । चतुर्थ्या तु सारणाया मध्यषड्जो मन्द्रनिषाद प्रविशति, मध्यमो गाधार प्रविशति, पञ्चमो मध्यम प्रविशति । उपसहरति—**श्रुतिद्वाविंशताविति** । एव सारणाचतुष्टयाच्छ्रुतिद्वाविशतौ ध्रुवाश्रुतिषु लीनाया सत्या द्वाविंशतिरेव श्रुतय इतीयत्तैतावत्सख्याकत्व ज्ञायते । द्वितीयसारणाया श्रुतिचतुष्टयलाभ , तृतीयाया षट्श्रुतिलाभ , चतुर्थ्या द्वादशश्रुतिलाभ । ननु पुनरप्यपकर्षण कर्तव्यम्, नेत्याह—**अत परमिति** । अत परमपकर्षण न कार्यम् । कुत ? यतो **रक्तिघ्नमिति** । अत परमपकर्षणे कृते स्वराणा रञ्जकत्वाभावात्स्वरत्वमेव नश्यति, 'स्वतो रञ्जयति श्रोतृचित्त स स्वर उच्यते' इति वक्ष्यमाणत्वात् ॥ -१९–२२ ॥

(क०) इत्थमियत्तया निश्चिताभ्य श्रुतिभ्य स्वराणा निष्पत्ति-माह—**श्रुतिभ्यः स्युः स्वरा** इति । चतसृभ्यस्तिसृभ्यो द्वाभ्या च

**पञ्चमो धैवतश्चाथ निषाद इति सप्त ते ॥ २३ ॥**
**तेषा सज्ञा सरिगमपधनीत्यपरा मता ।**

यथायोग द्वाविशते श्रुतिभ्य सप्त स्वरा भवन्तीत्यर्थ । अत्र पञ्च पक्षा सभवन्ति—श्रवणैकेन्द्रियग्राह्यत्वाद्विशेषस्पर्शशून्ययो स्वरश्रुत्योर्जातिव्यक्त्यो रिव तादात्म्यमिति प्रथम पक्ष । दर्पणे मुखविवर्तवच्छ्रुतिषु स्वरा विवर्तन्त इति द्वितीय । यथा घटस्य मृत्पिण्डदण्डादिकार्यत्व तथा स्वराणा श्रुति कार्यत्वमिति तृतीय । क्षीर दधिरूपेणेव श्रुतय स्वररूपेण विपरिणमन्त इति चतुर्थ । प्रदीपादन्धकारस्थितघटाद्यभिव्यक्तिवच्छ्रुतिभ्य स्वराणाम-भिव्यक्तिरिति पञ्चम । नाद्य, स्वरश्रुत्योर्भिन्नबुद्धिग्राह्यत्वादाश्रयाश्रयित्व-भेदाच्च जातिव्यक्त्योरपि 'निर्विशेष न सामान्यम्' इति न्यायेन भेदस्य सिद्धत्वाच्च । न द्वितीय, विवर्तत्वे हि स्वराणा भ्रान्तत्व स्यात्, न च तथा, तेषामबाधितप्रयोगहेतुत्वदर्शनात् । तृतीयो ऽपि न परीक्षाक्षम । स्वरव्यतिरेकेण श्रुतिसद्भावे प्रमाणाभाव इति वक्तु हि न युक्तम्, 'स्वरस्य हि श्रूयमाणमनुरणनात्मकत्व रणनमन्तरेण नोपपद्यते' इत्यार्थापत्त्या वा, 'अय स्वरो रणनपूर्वको ऽनुरणनात्मकत्वाद्दण्डाहतजयघण्टाऽनुरणनशब्दवत्' इत्यनुमानेन वा तत्सिद्धे । सत्यम् । यद्यपि स्फुटपौर्वापर्येण कार्यकारण-भावप्रतीतिरस्ति, तथा ऽप्युपादानस्य मृत्पिण्डादेर्यथा घटादिकार्यनिष्पत्तौ भेदेनानुपलब्धिर्न तथेह स्वरनिष्पत्तौ श्रुतीनामनुपलम्भ इति तासामकारण-त्वात् । चतुर्थपञ्चमावदुष्टत्वेन मतङ्गादिसमतत्वाद् ग्राह्यौ । अथ शुद्धस्वरा-नन्वर्थतया प्रसिद्धैर्नामभि परिगणयति —**षड्जेति** । षड्जादिनाम्नामन्वर्थता मतङ्गादिभिरुक्ता । तद्यथा—

'षण्णा स्वराणा जनक षड्भिर्वा जन्यते स्वरै ।
षड्भ्यो वा जायते ऽङ्गेभ्य षड्ज इत्यभिधीयते ॥'

षडपि स्वराञ्जनयति प्रकाशयतीति जनेरन्तर्भावितण्यर्थात् 'अन्येष्वपि दृश्यते' इति डप्रत्यये टिलोपे च सति षड्ज इति रूपम्। षडभि स्वैरङ्गभावेन प्रविष्टैर्जन्यते प्रकाश्यत इति वा षडज । पूर्ववद्रूपसिद्धि । षड्भ्यो नासाकण्ठोरस्तालुजिह्वादन्तस्थानेभ्यो जायत इति वा 'पञ्चम्याम जातौ' इति डप्रत्यये षड्ज इति ।

'प्राप्नोति हृदय शीघ्रमन्यस्माद्दृषभ स्मृत ।
स्त्रीगवीषु यथा तिष्ठन्विभाति ऋषभो महान् ॥
स्वरग्रामे समुत्पन्न स्वरो ऽयमृषभस्तथा ।'

ऋषति गच्छति हृदयमन्यस्वरेभ्य इति 'ऋष गतौ' इत्यस्माद्धातोरौणादिके ऽभच्प्रत्यये ऋषभ इति रूपम्। यथा गोसमूहे बलीवर्दस्तथा स्वरसमूहे राशौ द्वितीयो बलवान्। ऋषभवन्नदतीति वा ऋषभ ।

'वाच गानात्मिका धत्त इति गाधारसज्ञक '

गा गानात्मिका वाच धत्त इति 'धृ धारणे' इत्यस्माद्धातोर्गोशब्दे कर्मण्युपपदे ऽण्प्रत्यये पृषोदरादित्वाद्बहुलग्रहणाद्वा ऽलुकि गाधार इति रूपम्। गान्धर्वसुखहेतुत्वाद्वा गाधार ।

'स्वराणा मध्यमत्वाच्च मध्यम स्वर इष्यते ।'

सप्ताना स्वराणा चतुर्थो य स्वरस्तस्य मध्यस्थत्वात् 'मध्यान्म' इति भवार्थे मप्रत्यये मध्यम इति रूपम्। अथ वा मद्धियो ऽमो रोग इति मद्ध्यम । यद्वा मम धियो रोग इति मद्ध्यमशब्देन सप्ताना स्वराणा श्रूयमाणो रुचिरत्वाशङ्कया पीडयतीत्यर्थ ।

'स्वरान्तराणा विस्तार यो मिमीते स पञ्चम ।
पाठक्रमेण गणने सख्यया पञ्चमो ऽथ वा ॥'

'पचि विस्तारे' इत्यस्माद्धातोर्भावे घञि पञ्च विस्तार मिमीत इति 'आतोऽनुपसर्गे क' इति कप्रत्यये पञ्चम इति रूपम्। 'ह्वावामश्च' इत्यण्युक् च सञ्ज्ञात्वादुपेक्ष्येते। यद्वा पृषोदरादित्वाद्युगभाव आलोपश्च। स्वराणा क्रमेण गणने पञ्चमत्वाद्वा पञ्चमस्थानसभूतत्वाद्वा पञ्चम ।

'धीरस्यास्तीति धीवास्तत्सबन्धी धैवत स्मृत ।'
यद्वा, 'षष्ठस्थाने धृतो यस्मात्ततोऽसौ धैवतो मत ।'

धीरस्यास्तीति धीवान्, तत्सबन्धित्वेन 'तस्येदम्' इत्यणि धैवत इति रूपम्। सबन्धित्व चानेकप्रकार निरूप्यनिरूपकलक्षणमास्वाद्यास्वादक-लक्षण जन्यजनकलक्षण चेति। तत्रोत्तरस्वरेण ससृष्टश्रुतित्वात्स्थूलमतीना दुर्विवेकत्वाद्धीमत सूक्ष्ममतेरेव निरूप्यत्वाद्धैवत । षष्ठस्थाने ललाटस्थाने धृतत्वाद्वा धैवत ।

'निषीदन्ति स्वरा सर्वे निषादस्तेन कथ्यते।'

'षद्लृ विशरणे' इत्यस्माद्धातो, निषीदन्ति पर्यवस्यन्त्यस्मिन्स्वरा इति 'अकर्तरि च' इति सूत्रेण घञि निषाद इति रूपम्। इत्युक्तप्रकारेण ते स्वरा सप्तैवेति नियमे सप्तधात्वाश्रितत्व सप्तचक्राश्रितत्व वा निमित्त मतङ्गोक्तमनुसधेयम्॥ प्रयोगसौकर्यार्थं तेषामाद्याक्षराण्युद्धृत्य सञ्ज्ञाऽन्तरा-ण्याह—**तेषा संज्ञा** इति। सरिगादीना मतङ्गाभिमत उद्धारक्रम उच्यते —अत्राकचटतपयशा अष्टौ वर्गा । तत्राष्टमस्य तृतीय हरिबीजयुक्तमाद्य स्वरमुद्धरेत्। हरिबीजमकार । सप्तमस्य द्वितीय कामबीजयुक्त द्वितीयस्व-रमुद्धरेत्। कामबीजमिकार । द्वितीयस्य तृतीय हरिबीजयुक्त तृतीयस्वर-मुद्धरेत्। षष्ठस्य पञ्चममकारयुक्त [1]चतुर्थस्वरमुद्धरेत्। षष्ठस्य प्रथमम-

[1] मध्यमस्वर समुद्धरेत्

**श्रुत्यनन्तरभावी य स्निग्धो ऽनुरणनात्मक: ॥ २४ ॥**
**स्वतो रञ्जयति श्रोतृचित्त स स्वर उच्यते ।**

कारयुक्त पञ्चमस्वरमुद्धरेत् । पञ्चमस्य चतुर्थमकारयुक्त षष्ठस्वरमुद्धरेत् । पञ्चमस्य पञ्चम कामबीजयुक्त सप्तमस्वरमुद्धरेत् । अत्र सरिगादिष्वाद्याक्षराणा व्यञ्जनत्वात्कथ स्वरत्वमित्याक्षिप्याचार्यपरिभाषया सकेतमात्रमेतदिति प्रत्याह मतङ्ग ॥ २३, २३- ॥

(सु०) एव श्रुतीर्निरूप्य स्वरान्निरूपयति—श्रुतिभ्य इति । षड्जर्षभेयादीनामाद्याक्षरैर्व्यवहाराय सज्ञान्तराणि कथयति—तषामिति । सरिगमपधनीत्येता प्रथम स्वरोपादानात्तेषा पूर्वाभ्या ऽपरा सज्ञा । यद्यपि षऋगमपधनीति सज्ञाघोषण युक्त तथा ऽपि सरिगेत्यपभ्रश पाठ ॥ २३, २३ ॥

(क०) स्वराणा सामान्यलक्षण स्वरशब्दस्य निरुक्ति चाह—**श्रुत्यनन्तरे**ति । श्रुत्यनन्तरभावी, श्रुतेश्चतुर्थ्यादेर्मारुताद्याहत्युत्पन्नप्रथमध्वने रनन्तर भाव्याविर्भवनशील , स्निग्धो ऽरूक्ष सन्दूरसश्राव्य अनुरणनात्मको ऽनुस्वानरूप , स्वत सहकारिकारणनिरपेक्ष श्रोतृचित्त रञ्जयत्यनुरक्त करोति । स्वत शब्दोपपदात 'रञ्ज रागे' इत्यस्माद्धातो 'अन्येभ्यो ऽपि दृश्यते' इति डप्रत्यये टिलोपे पूर्वपदस्थतकारादे पृषोदरादित्वाल्लोपे च स्वर इति रूपसिद्धि ॥ -२४, २४- ॥

(सु०) स्वरस्य लक्षण निर्वचन च कथयति—श्रुत्यनन्तरेति । श्रुतेरनन्तर भवतीति श्रुत्यनन्तरभावी । प्रथमतन्त्र्यामाहताया यो ध्वनिरनुरणनशून्य उत्पद्यते स श्रुति , यस्तु ततो ऽनन्तरमनुरणनरूप श्रूयते स स्वर । कथ तस्य स्वरत्वमियत आह—स्वत इति । स्वतो ऽन्यानपेक्षतया यस्माच्छ्रोतृचित्त रञ्जयति तस्मात्स्वर इति निरुक्ति । कथ तस्य रञ्जकत्वम्? अतो हेतुगर्भ

विशेषण स्निग्ध इति। यद्यपि स्निग्धत्वमपामेव धर्म, 'स्नेहो ऽपा विशेष-गुण' इत्युक्तत्वात्, न तस्य श्रवणेन्द्रियगम्यता, तथा ऽप्यौपचारिक स्निग्धत्व स्वरेषु गृह्यते। अत्र बहुधा विप्रतिपत्ति —केचित्स्वरश्रुत्योस्तादात्म्य वर्णयन्ति। यदाहु —

'विशेषस्पर्शशून्यत्वाच्छ्रवणेन्द्रियगम्ययो।
स्वरश्रुत्योस्तु तादात्म्य जातिव्यक्त्योरिवानयो॥'

इति। केचित्स्वरश्रुत्योर्विवर्त्यविवर्तकतामाचक्षते। यदाहु —

'नराणा तु मुख यद्वद्दर्पणेषु विवर्तते।
प्रतिभान्ति स्वरास्तद्वच्छ्रुतिष्वेव विवर्तिन॥'

इति। केचित्स्वरश्रुत्यो कार्यकारणभाव वदन्ति। यदाहु —

'स्वराणा श्रुतिकार्यत्वमिति केचिद्वदन्ति हि।
मृत्पिण्डदण्डकार्यत्व घटस्येह यथा भवेत्॥'

इति। केचित्परिणामपक्षमाद्रियन्ते। यदाहु —

'श्रुतय स्वररूपेण परिणाम व्रजन्ति हि।
परीणमेद्यथा क्षीर दधिरूपेण सवथा॥'

इति। केचित्पुनरभिव्यक्तिपक्षमङ्गीकुर्वते। यदाहु —

'षड्जादय स्वरा सप्त व्यज्यन्ते श्रुतिभि सदा।
अन्धकारस्थिता यद्वत्प्रदीपेन घटादय॥'

इति। एतेषु पक्षेषु परिणामाभिव्यक्तिपक्षावेव स्वीकृतौ मतङ्गेन। यदाह—

'भेद स्वलक्षणाना सामान्येनान्यवस्तुवत्सिद्ध।
तद्धि विशेषै. शून्य भवति नभ पुष्पसकाशम्॥
नानाबुद्धिगृहीतत्वात्स्वरश्रुत्योस्तु भिन्नता।
आश्रयाश्रयिभेदाच्च तादात्म्य केन सिध्यति॥

यदभाणि विवर्तत्व स्वराणा तदसगतम् ।
विवर्तत्वे स्वराणा हि भ्रान्तिज्ञान प्रसज्यते ॥
तथा च कारणत्व च श्रुतीना नैव सभवेत् ।
कार्येषु विद्यमानेषु कारणस्योपलम्भनात् ॥
घटादौ विद्यमाने हि मृत्पिण्डो नोपलभ्यते ।
परिणामो ऽप्यभिव्यक्तिर्न्याय्य पक्ष सता मत ॥'

इति । मतङ्गेन त्वन्यथा स्वरशब्दो व्युत्पादित । यदाह —

'राजृ दीप्तावस्य धातो स्वशब्दपूर्वकस्य च ।
स्वय हि राजते यस्मात्तस्मात्स्वर इति स्मृत ॥'

इति । षड्जादीना निरुक्तिरुक्ता सगीतसमयसारकारेण—

'नासा कण्ठ उरस्तालु जिह्वा दन्तास्तथैव च ।
षडभि सजायते यस्मात्तस्मात्षड्ज इति स्मृत ॥
नाभे समुत्थितो वायु कण्ठशीर्षसमाहत ।
नदत्यृषभवद्यस्मात्तस्मादृषभ ईरित ॥
नाभे समुत्थितो वायु कण्ठशीर्षसमाहत ।
गन्धर्वसुखहेतु स्याद्गाधारस्तेन हेतुना ॥
वायु समुत्थितो नाभेर्हृदये च समाहत ।
मध्यस्थानोद्भवत्वात्तु मध्यमत्वेन कीर्तित ॥
वायु समुत्थितो नाभेरोष्ठकण्ठशिरोहृदि ।
पञ्चस्थानसमुद्भूत पञ्चमस्तेन कीर्तित ॥
नाभे समुत्थितो वायु' कण्ठतालुशिरोहृदि ।
तत्तत्स्थानधृतो यस्मात्ततो ऽसौ धैवतो मत ॥
नाभे समुत्थिते वायौ कण्ठतालुशिरोहते ।
निषीदन्ति स्वरा सर्वे निषादस्तेन कथ्यते ॥

इति ॥ -२४, २४- ॥

ननु श्रुतिश्चतुर्थ्यादिरस्त्वेव स्वरकारणम् ॥ २५ ॥
त्र्यादीना तत्र पूर्वासा श्रुतीना हेतुता कथम् ।
ब्रूमस्तुर्यातृतीयाऽऽदि श्रुति पूर्वाऽभिकाङ्क्षया ॥ २६ ॥
निर्धार्यते ऽत श्रुतय पूर्वा अप्यत्र हेतवः ।
दीप्ता ऽऽयता च करुणा मृदुर्मध्येति जातयः ॥ २७ ॥
श्रुतीना पञ्च तासा च स्वरेष्वेव व्यवस्थिति ।
दीप्ता ऽऽयता मृदुर्मध्या षड्जे स्यादृषभे पुन ॥ २८ ॥
सस्थिता करुणा मध्या मृदुर्गाधारके पुनः ।
दीप्ताऽऽयते मध्यमे ते मृदुमध्ये च सस्थिते ॥ २९ ॥
मृदुर्मध्या ऽऽयताऽऽख्या च करुणा पञ्चमे स्थिता ।
करुणा चायता मध्या धैवते सप्तमे पुनः ॥ ३० ॥
दीप्ता मध्येति तासा च जातीना ब्रूमहे भिदा ।
तीव्रा रौद्री वज्रिकोग्रेत्युक्ता दीप्ता चतुर्विधा ॥ ३१ ॥
कुमुद्वत्यायता या ऽस्याः क्रोधा चाथ प्रसारिणी ।
सदीपनी रोहिणी च भेदाः पञ्चेति कीर्तिताः ॥ ३२ ॥

(क०) यद्येव चतुर्थ्यादेरेव श्रुते स्वरकारणत्वमस्तु, न पूर्वपूर्वासामित्याक्षिपति—**नन्विति** । त्र्यादीनामिति । तृतीयाऽऽदीनामित्यर्थ । अत्र वृत्तौ तीयप्रत्ययान्तस्य 'प्रत्ययलोपे ऽपि तदर्थग्रहणम्' इति त्र्यादीनामिति निर्देशोपपत्ति । समाधत्ते—**ब्रूम** इति । तुर्यातृतीयाऽऽदि, षड्जमध्यमपञ्चमाना तुर्या, ऋषभधैवतयोस्तृतीया, आदिशब्देन गाधारनिषादयोर्द्वितीया च श्रुति, पूर्वाऽभिकाङ्क्षया, आदिशब्दसामर्थ्यात्पूर्वेत्यस्य वीप्सा कर्तव्या पूर्वपूर्वाऽभिकाङ्क्षयेति । उत्तरोत्तरतारूपेण लक्षणेन स्वोत्पत्तौ

दयावती तथा ऽऽलापिन्यथ प्रोक्ता मदन्तिका ।
त्रयस्ते करुणाभेदा मृदोर्भेदचतुष्टयम् ॥ ३३ ॥
मन्दा च रतिका प्रीतिः क्षितिर्मध्या तु षड्विधा ।
छन्दोवती रञ्जनी च मार्जनी रक्तिका तथा ॥ ३४ ॥
रम्या च क्षोभिणीत्यासामथ ब्रूमः स्वरस्थितिम् ।
तीव्राकुमुद्वतीमन्दाच्छन्दोवत्यस्तु षड्जगाः ॥ ३५ ॥
दयावती रञ्जनी च रक्तिका चर्षभे स्थिताः ।
रौद्री क्रोधा च गाधारे वज्रिका ऽथ प्रसारिणी ॥ ३६ ॥
प्रीतिश्च मार्जनीत्येताः श्रुतयो मध्यमाश्रिताः ।
क्षिती रक्ता च सदीपन्यालापिन्यपि पञ्चमे ॥ ३७ ॥
मदन्ती रोहिणी रम्येत्येतास्तिस्रस्तु धैवते ।
उग्रा च क्षोभिणीति द्वे निषादे वसतः श्रुती ॥ ३८ ॥

सख्यया तुर्याऽऽदिव्यपदेशे च पूर्वपूर्वस्या साकाङ्क्षतया यतो निर्धार्यते ऽत इत्यर्थ । श्रुतीनामन्योऽन्यमसकीर्णतया स्वरूपपरिज्ञानाय क्वचित्तासा सा जात्येन सगत्या रक्तिलाभाय चावान्तरभेदसहिताना जातीना स्वरेषु व्यवस्थान दर्शयति—**दीप्ता** ऽऽयतेत्यादिना । स्वरविनियोगानन्तरमुद्दिष्टानामपि श्रुति जातीनामिह निरूपण श्रुतिस्वरविवेचनरूपार्थसगतिवशादुपपन्नम् । व्युत्क्र मेणोद्देशस्तु क्वचित्क्रमस्याविवक्षितत्वज्ञापनार्थम् । एतेन ‘ कुलानि जातय — ’ इत्यादिक्रमस्त्वविवक्षित इति मन्तव्यम् ॥ २५–३८ ॥

(सु०) ‘श्रुतिभ्य स्यु स्वरा.’ इत्युक्तम्, तत्र श्रुतिभ्य इति पञ्चम्या ‘जनिकर्तु प्रकृति ’ इत्यनेन श्रुतीना स्वरान्प्रति कारणत्व प्रतीयते, अय स्वरश्चतु श्रुतिरय स्वरस्त्रिश्रुतिरय द्विश्रुतिरित्युक्तत्वाच्च सर्वासामपि कारणत्व

प्रतीयते, तदाक्षिपति—नन्विति। ननु यस्या श्रुतौ स्वर स्थाप्यते सा चतुर्थ्यादि श्रुति, चतुर्थी सप्तमी नवमी त्रयोदशी सप्तदशी विंशी द्वाविंशी च श्रुतिरभिव्यञ्जकत्वेन परिणामकत्वेन वा स्वराणा षड्जादीना कारणमस्तु नाम, पूर्वासा त्र्यादीना श्रुतीना स्वर प्रति कथ हेतुत्वम्? त्र्यादीनामित्यत्रादिशब्देन षड्जमध्यमपञ्चमेषु तिसृणा तिसृणामृषभधैवतयोर्द्वयोर्द्वयोर्गांधारनिषादयोरेकस्या एकस्या पूर्वावस्थिताया श्रुत्या स्वर प्रति क उपयोग? परिहरति—ब्रूम इति। तुरीयातृतीयाऽऽदि श्रुति पूर्वापेक्षया निर्धार्यत इय श्रुतिश्चतुर्थीय तृतीयेय द्वितीयेति पूर्वा श्रुतीरपेक्ष्याय व्यवहार। यदि पूर्वा श्रुतयो न स्युस्तर्हि किमपेक्ष्याय चतुर्थ्यादिव्यवहार स्यात्? अतश्चतुर्थीत्वादिनिर्धारणार्थं पूर्वासामपि श्रुतीना हेतुत्वसिद्धि। अधुना श्रुतिजातीर्विभजते—दीप्ता ऽऽयतेति। श्रुतीना पञ्च जातयो भवन्ति दीप्ता ऽऽयता करुणा मृदुर्मध्येति। तासु का जाति कस्मिन्स्वरे निवसतीत्यपेक्षायामाह—तासा चेति। षड्जे दीप्ताऽऽदयश्चतस्र श्रुतिजातय, प्रथमा श्रुतिर्दीप्ता द्वितीया ऽऽयता तृतीया मृदुश्चतुर्थी मध्या। ऋषभे तु प्रथमा श्रुति करुणा द्वितीया मध्या तृतीया मृदु। गाधारे प्रथमा श्रुतिर्दीप्ता द्वितीया ऽऽयता। मध्यमे ते दीप्ताऽऽयते मृदुमध्ये च सस्थिते। ततश्च मध्यमस्य प्रथमा श्रुतिर्दीप्ता द्वितीया ऽऽयता तृतीया मृदुश्चतुर्थी मध्या। पञ्चमे प्रथमा श्रुतिर्मृदुर्द्वितीया मध्या तृतीया ऽऽयता चतुर्थी करुणा। धैवते प्रथमा श्रुति करुणा द्वितीया ऽऽयता तृतीया मध्या। सप्तमे निषादे प्रथमा श्रुतिर्दीप्ता द्वितीया मध्येति। तासामपि जातानामवान्तरजाती प्रतिज्ञाय कथयति—तासा चेति। दीप्ता चतुर्विधा तीव्रा रौद्री वज्रिकोग्रेति। आयताया पञ्च भेदा कुमुद्वती क्रोधा प्रसारिणी सदीपनी रोहिणी चेति। करुणाया भेदत्रय दयावत्यालापिनी मदन्तिकेति। मृदोश्चत्वारो भेदा मन्दा रति प्राति क्षितिरिति। मध्या तु षड्विधा षट्प्रकारा च्छन्दोवती रञ्जनी माजनी रक्तिका रम्या क्षोभिणीति। तुशब्देन पूर्वाभ्यो ऽधिकभेदत्व सूचितम्। एतासा जातीना स्वरस्थिति प्रतिज्ञाय कथयति—आसामथेति। आसा श्रुतिजातीना षड्जगा षड्जे वर्तमानाश्चतस्रो जातयस्तीव्रादय। ततश्च षड्जे प्रथमा श्रुतिस्तीव्राजात्याक्रान्ता दीप्ता, द्वितीया कुमुद्वतीजातिका ऽऽयता, तृतीया मन्दाजातिक मृदु, चतुर्थी च्छन्दोवतीजातिका मध्या। ऋषभे प्रथमा श्रुतिर्दयावतीजातिक

ते मन्द्रमध्यताराख्यस्थानभेदात्त्रिधा मता ।
त एव विकृतावस्था द्वादश प्रतिपादिता ॥ ३९ ॥
च्युतो ऽच्युतो द्विधा षड्जो द्विश्रुतिर्विकृतो भवेत् ।
साधारणे काकलीत्वे निषादस्य च दृश्यते ॥ ४० ॥
साधारणे श्रुति षाड्जीमृषभः सश्रितो यदा ।
चतु श्रुतित्वमायाति तदैको विकृतो भवेत् ॥ ४१ ॥

करुणा, द्वितीया रञ्जनीजातिका मध्या, तृतीया रतिजातिका मृदु । गाधारे प्रथमा श्रुती रौद्रीजातिका दीप्ता, द्वितीया क्रोधाजातिका ऽऽयता । मध्यमे प्रथमा श्रुतिवज्रिकाजातिका दीप्ता, द्वितीया प्रसारिणीजातिका ऽऽयता, तृतीया प्रीतिजातिका मृदु , चतुर्थी मार्जनीजातिका मध्या । पञ्चमे प्रथमा श्रुति क्षितिजातिका मृदु , द्वितीया रक्ताजातिका मध्या, तृतीया सदीपनीजातिका ऽऽयता, चतुर्थ्यालापिनीजातिका करुणा । धैवते प्रथमा श्रुतिर्मदन्तीजातिका करुणा, द्वितीया रोहिणीजातिका ऽऽयता, तृतीया रम्याजातिका मध्या । निषादे प्रथमा श्रुतिरुग्राजातिका दीप्ता, द्वितीया क्षोभिणीजातिका मध्येति । ननु किं श्रुतिजातिनिरूपणेन प्रयोजनम्? उच्यते—तत्तज्जातिका श्रुति श्रुत्वा मनसो नामसाम्येन तथा तथा विकार उत्पद्यत इति सूचयितु श्रुतिजातिनिरूपणम् । ततश्च दीप्ता श्रुतिमाकर्ण्य मनसो दीप्तत्वमिव भवति, आयता श्रुतिमाकर्ण्या-यतत्वमिव, एव करुणत्वादि ज्ञातव्यम् ॥ -२९–३८ ॥

(क०) प्रसङ्गाच्छ्रुतिजातीरुक्त्वा प्रकृतस्वरपरामर्शपूर्वक स्थानभेदात्तेषा त्रैविध्यमाह-—ते मन्द्रेति । ननु च्युतादय पृथक्स्वरा स्यु , किं तेषामवस्थाऽन्तरापन्नषड्जादित्वकल्पनयेत्यत आह—त एवेति । द्वादशेति ॥ षड्जमध्यमग्रामद्वयापेक्षया क्रमप्राप्तान्विकृतस्वराॅंल्लक्षयति—च्युतो ऽच्युत इत्यादिना । चतु श्रुति षड्जो द्विश्रुतिर्विकृत सश्च्युतो ऽच्युत इति द्विधा भवेत् । स च साधारणे स्वसाधारणे च्युत , निषादस्य काकलीत्वे

साधारणे त्रिश्रुतिः स्यादन्तरत्वे चतुःश्रुतिः ।
गाधार इति तद्भेदौ द्वौ नि शङ्केन कीर्तितौ ॥ ४२ ॥
मध्यम. षड्जवद् द्वेधा ऽन्तरसाधारणाश्रयात् ।
पञ्चमो मध्यमग्रामे त्रिश्रुति कैशिके पुनः ॥ ४३ ॥
मध्यमस्य श्रुति प्राप्य चतुःश्रुतिरिति द्विधा ।
धैवतो मध्यमग्रामे विकृत स्याच्चतुःश्रुतिः ॥ ४४ ॥
कैशिके काकलीत्वे च निषादस्त्रिचतुःश्रुतिः ।
प्राप्नोति विकृतौ भेदौ द्वाविति द्वादश स्मृता ॥ ४५ ॥
ते शुद्धै सप्तभि सार्ध भवन्त्येकोनविंशतिः ।

चाच्युत इति दृश्यते ॥ साधारणे त्रिश्रुति स्यादित्यत्र मध्यमसाधारण इत्यर्थ । अन्तरत्वे चतु श्रुतिरित्यत्र स्वस्यान्तरत्व इति विशेषणीयम् ॥ **मध्यमः षड्जवदि**ति । अत्र षडजवदिति षड्जो यथा द्विश्रुतिर्विकृतश्चच्यु-तत्वाच्युतत्वभेदभिन्नस्तथा मध्यमो ऽपीति वतेरर्थ ॥ कैशिके काकलीत्वे चेत्यत्र कैशिके षड्जसाधारणे त्रिश्रुति, स्वस्य काकलीत्वे चतु श्रुति-रिति ॥ ३९— ४५ ॥

(सु०) एव श्रुती श्रुतिजाती [1]श्रुतिजातिभ्य स्वरोत्पत्ति च कथयित्वा स्वरभेदान्निरूपयति—त इति । ते षड्जादय स्वरास्त्रिधा त्रिप्रकारा । कुत-स्त्रिप्रकारत्वम् ? अत आह—मन्द्रमध्यताराख्यस्थानभेदात् । ततश्च तात्त्विको भेदो नास्ति, कि तु स्थानकल्पितो भेद । यथैक एव देवदत्तस्त्रिभूमिके प्रासादे प्रथमभूमिकाया द्वितीयभूमिकाया तृतीयभूमिकाया च तिष्ठन्नन्य इव [2]भासते तथा स्वरा अपि स्थानविशेषेणेत्यर्थ । ननु यथा षड्जादीना सप्ताना स्वराणा स्थान-

[1] श्रुतिभ्य
[2] प्रतिभाति

विशेषेणैव भेदस्तात्त्विक प्रतीयते तथा मन्द्रमध्यतारस्थानस्थिताना षड्जादीनामपीति कथमत्रैव काल्पनिकत्वमङ्गीक्रियते? ब्रूम , प्रत्यभिज्ञानात्स्थानत्रये ऽपि त एव स्वरा इति प्रतीयते। य एव मन्द्रस्थ षड्ज स एवाय मध्यस्थाने तारस्थाने च प्रतीयत इति सकललोकसाक्षिका प्रत्यभिज्ञा नावज्ञातु शक्यते। नैव षड्जर्षभादिषु सप्तसु प्रत्यभिज्ञालेशो ऽप्यस्तीति महान्विशेष । एव शुद्धान्सप्त स्वरान्निरूप्य द्वादश विकृतान्स्वरान्विभज्य निरूपयति—त एवेति। ते शुद्धा सप्त स्वरा एव विकृतावस्था विकार प्राप्ता द्वादशसख्याका भवन्ति ॥ ३९ ॥ तमेव विकार दर्शयति—च्युत इति। द्विश्रुति षड्जो द्विधा विकृतो भवतीति च्युतश्चाच्युतश्चेत्युच्यते। तत्र च्युतो यस्या चतुर्थ्यां श्रुतौ स्थापितस्तस्या सकाशात्प्रच्युत , अच्युतस्तु तस्यामेव श्रुताववस्थित पूर्वश्रुतिहीनतया विकृतो भवति। कदा तस्यैवविध विकृतत्वम्? तदाह—साधारण इति। साधारणे स्वसाधारणे निषादस्य च काकलीत्व उभयविध विकृतत्वम्।

> ‘निषादो यदि षड्जस्य श्रुतिमाद्या समाश्रयेत्।
> ऋषभस्त्वन्तिमा प्रोक्त षड्जसाधारण तदा ॥’

इति वक्ष्यमाणे षड्जसाधारणे षड्ज स्वस्थानाच्चतुर्थश्रुते प्रच्युतस्तृतीयश्रुताववस्थितो विकृतो भवति।

> ‘श्रुतिद्वय चेत्षड्जस्य निषाद सश्रयेत्तदा।
> स काकली मध्यमस्य गाधारस्त्वन्तर स्वर ॥’

इति वक्ष्यमाणे निषादस्य काकलीत्वे पूर्वश्रुतिद्वयहीनत्वादच्युत स्वस्थाने चतुर्थश्रुतौ स्थित एव विकृतो भवति। ननु स्वस्थानस्थितस्य पूर्वश्रुतिद्वयहीनत्वे ऽपि ध्वनिविकाराभावात्कथ विकृतत्वम्? उच्यते—यद्यपि पूर्वश्रुतिविहीनत्वे तत्स्थानस्थितत्वाद् ध्वनिविकारो नास्ति, तथा ऽपि निषादस्य स्वस्थानस्थितत्वे चतु श्रुतित्वात्षड्जस्यायतत्व भवति। यदा काकलीत्वे निषाद षड्जस्य द्वितीयश्रुतौ तिष्ठति, तदा द्विश्रुतित्वादनायत प्रतीयते। तस्माद्भवत्येव विकृत ॥ ४० ॥ ऋषभस्य विकृतत्व कथयति—साधारण इति। साधारणे षड्जसाधारणे षड्जस्यान्तिमा श्रुतिमृषभो गृह्णाति, तदा चतु श्रुति सन्विकृतो भवति ॥ ४१ ॥ गाधारस्य द्वौ भेदौ विकृतौ कथयति—साधारण इति। साधारणे मध्यमसाधारणे

**मयूरचातकच्छागक्रौञ्चकोकिलदर्दुराः ॥ ४६ ॥**
**गजश्च सप्त षड्जादीन्क्रमादुच्चारयन्त्यमी ।**

मध्यमस्य प्रथमा श्रुति गाधारो गृह्णाति । तदा त्रिश्रुतिविकृतो भवति । [1]अन्तरस्तु गाधारो मध्यमस्याद्य श्रुतिद्वय गृह्णाति । तदा चतु श्रुति सन्विकृतो भवति ॥४२॥ मध्यमस्य द्वौ विकृतौ भेदौ कथयति—मध्यम इति । षड्जो यथा च्युतत्वेनाच्युतत्वेन च द्वेधा विकृत कथित स्वसाधारणे निषादस्य च काकलीत्वे, तद्वन्मध्यमसाधारणे गाधारस्यान्तरत्वे च मध्यमो ऽपि द्वेधा विकृतो भवति ।

'मध्यमस्यापि गपयोरेव साधारण मतम् ।' इति,
'　　मध्यमस्य गाधारस्त्वन्तर स्वर ।'

इति च मध्यमसाधारण गाधारस्यान्तरत्व च वक्ष्यते ॥ ४२ ॥ पञ्चमस्य द्वेधा विकृतत्व कथयति—**पञ्चम** इति । पञ्चमे तृतीयश्रुतिसस्थिते सति मध्यमग्राम इति वक्ष्यते । तस्मिन्मध्यमग्रामे त्रिश्रुति पञ्चमो विकृतो भवति । पुनश्च कैशिके मध्यमसाधारणे मध्यमस्यान्तिमा श्रुति प्राप्य चतु श्रुति सन्विकृतो भवति ॥ ४३, ४३- ॥ धैवतस्यैकधा विकृतत्व कथयति—**धैवत** इति । मध्यमग्रामे पञ्चमस्य तृतीयश्रुताववस्थितत्वादन्तिमा पञ्चमस्य श्रुतिर्धैवत प्रविशति । स तदा चतु श्रुतिर्विकृतो भवति ॥-४४ ॥ निषादस्य द्विधा विकृतत्व कथयति—**कैशिक** इति । कैशिके षड्जसाधारणे निषाद षड्जस्य प्रथमश्रुतौ यदा तिष्ठति, तदा त्रिश्रुति सन्विकृत , यदा तु काकली भवन्षड्जस्य श्रुतिद्वय गृहीत्वा चतु श्रुतिर्भवति तदा ऽपि विकृत । एव द्वादश विकृतभेदा । विकृताना शुद्धानामप्येकोनविशतिर्भेदा भवन्तीत्याह—**तैरि**ति ॥ ४५, ४५- ॥

(क०) लोकतो ऽपि षड्जादिस्वरूपपरिज्ञानाय मयूरादिप्राणिविशेषध्वनि निदर्शनाभिप्रायेणाह—**मयूरे**ति । स्वराणामन्योऽन्य स्वरूपकृत भेदमुक्त्वा प्रसङ्गात्प्रयोगार्थ प्रकारभेदेन तेषा चातुर्विध्य दर्शयति—

[1] अन्तरस्वरस्तु

चतुर्विधाः स्वरा वादी सवादी च विवाद्यपि ॥ ४७ ॥
अनुवादी च वादी तु प्रयोगे बहुल स्वरः ।
श्रुतयो द्वादशाष्टौ वा ययोरन्तरगोचराः ॥ ४८ ॥
मिथः सवादिनौ तौ स्तो निगावन्यविवादिनौ ।
रिधयोरेव वा स्याता तौ तयोर्वा रिधावपि ॥ ४९ ॥

**चतुर्विधा** इति । वदनाद्वादी । ननु वदनादिक प्राणिधर्म कथमचेतनाना स्वराणा सभवति? सत्यम्, वदन हि नाम रागप्रतिपादकत्व विवक्षितम्, न वचनमित्यदोष । सवदनात्सवादी । सवदन नाम यद्वादिना स्वरेण रागस्य रागत्व जनित तन्निर्वाहकत्वम् । विवदनाद्विवादी । विवदन नाम वाद्यादिभि स्वरैरुत्पाद्यमानाया रक्तेर्विनाशकत्वम् । अनुवदनादनुवादी । अनुवदन नाम वादिसवादिसपादितरक्त्यनुकूलत्वम् । क्रमेण ताल्लँक्षयति—**वादी** त्वित्यादिना । प्रयोगे जात्यादौ बहुलो ग्रहत्वन्यासत्वादिभेदेन पुन पुनरावृत्त । सवादिलक्षणपरिज्ञानार्थमादौ मण्डलप्रस्तार वीणाप्रस्तार वा लिखेत् । तत्र मण्डलप्रस्तारो यथा—षडूर्ध्वरेखा लिखित्वा तदूर्ध्वाध किंचिदग्राण्यवशेष्य मध्य पञ्च तिर्यग्रेखा किंचिदग्रावशेष लिखेत् । तदा परितो रेखाऽग्राणि द्वाविंशतिर्भवन्ति । वीणाप्रस्तारस्तु—तिर्यग्रेखा एव द्वाविंशतिं लिखेत् । तत्र वामतो दक्षिणतो वा रेखाऽग्राणि द्वावि शतिर्भवन्ति । तत्रैकस्मिन्श्रुतिमण्डले शुद्धान्विकृतान्वा षड्जादीन्स्वस्व श्रुतिसख्यया विलिखेत् । तेषु ययो स्वरयोरन्तरगोचरा स्वाधारश्रुती विहाय मध्यवर्तिन्य श्रुतयो द्वादशाष्टौ वा दृश्यन्ते तौ मिथ सवादिनौ भवत इति ज्ञातव्यम् । **निगावन्यविवादिनाविति** । अन्येषा पञ्चाना विवादिनौ विरोधिनौ । ननु निगयोरितरान्पञ्चापि स्वरान्प्रति विवादित्वमुक्तम्, तदनुपपन्नम्, शुद्धयोर्मध्यमनिषादयो परस्पर सवादित्वदर्शनादित्यपरितोषेण

**शेषाणामनुवादित्व वादी राजा ऽत्र गीयते ।**
**सवादी त्वनुसारित्वादस्यामात्यो ऽभिधीयते ॥ ५० ॥**
**विवादी विपरीतत्वाद्धीरैरुक्तो रिपूपम. ।**

पक्षान्तरमाह—**रिधयोरेव वेति** । प्रथममन्यविवादिनावित्यविशेण कथन तु समश्रुतिकयोरेव सवाद इति मतानुसारेण । अतो द्वादशाष्टश्रुत्यन्तरित्वमात्रमेव सवादिलक्षणमिति सिद्ध भवति । **तौ तयोर्वेति** । तौ रिधौ तयोर्निगयोर्विवादिनौ स्त । एतेनैकश्रुत्यन्तरितौ परस्पर विवादिनाविति लक्षण सूचित भवति । 'द्व्यन्तरत्वाद्विवादित्वमुक्तम्' इति मतङ्गोक्तस्यापि द्वयोरेकस्वराधारश्रुत्या सह द्व्यन्तरत्वस्य विवक्षितत्वादेकश्रुत्यन्तरितत्वमेवार्थ । एवम् 'त्रयोदशनवान्तरम्' इति मतङ्गोक्तस्य सवादिलक्षणस्यापि द्वादशाष्टान्तरत्वमेवार्थ । अत शुद्धावस्थाया रिगयोर्धन्योश्च यथा परस्पर विवाद, तथा विकृतावस्थाया गमयोर्निसयोश्च विवादो द्रष्टव्य । अयमभिप्राय —वादिसवाद्यनुवादिना परस्पर स्थानव्यत्ययेन प्रयोगे ऽपि जातिरागहानिर्न भवति, विवादिनस्तु प्रयोगे जातिरागहानिर्भवेदिति । शेषाणा वाद्यादिलक्षणरहितानाम् । अथ प्रयोगे वाद्यादीना प्रधानोपसर्जनभावेन तारतम्य सदृष्टान्त दर्शयति—वादी राजेत्यादिना ॥ -४६—५१ ॥

(सु०) एतेषा स्वराणा स्वरूपज्ञानार्थमसाधारणानुच्चारयितॄन्कथयति—मयूरेति । मयूर षड्जमुच्चारयति, चातक ऋषभम्, छागो गाधारम्, क्रौञ्चो मध्यमम्, कोकिल पञ्चमम्, दर्दुरो धैवतम्, गजो निषादमिति ॥ ४६, ४६- ॥ स्वराणा चातुर्विध्य कथयति—**चतुर्विधा इति** । वादिनो लक्षण कथयति—**वादी त्विति** । प्रयोगे जातिरागादौ बहुलो बाहुल्येन य उच्चार्यते सो ऽशस्वरापरपर्यायो वादी । ननु वदतीति वादी, वदन च प्राणिधम कथमचेतनाना स्वराणा सभवति? सत्यम्, वदन हि नामात्र रागप्रतिपादकत्व विवक्षितम्, ततश्च रागाणा रागत्व वदन्ति प्रतिपादयन्तीति वादिन ॥ -४७, ४७- ॥ संवादि-

लक्षण कथयति—श्रुतय इति । द्वादशाष्टौ वा श्रुतयो ययोरन्तरे वर्तन्ते तौ मिथ परस्पर सवादिनौ भवत । ननु मतङ्गेन त्रयोदशनवश्रुत्यन्तरत्वेन सवादित्वमुक्तम्, यदाह—'सवादिनस्तु पुन समश्रुतिकत्वे सति त्रयोदशनवान्तरत्वे वा ऽन्योऽन्य बोद्धव्या ' इति । दत्तिलेनाप्युक्तम्—

'मिथ सवादिनौ ज्ञेयौ त्रयोदशनवान्तरौ ।'

इति, तत्कथमुच्यते 'श्रुतयो द्वादशाष्टौ वा ययोरन्तरगोचरा ' इति? उच्यते—ययो श्रुत्यो स्वराववस्थितौ ते श्रुती विहाय मध्यस्था श्रुतयो द्वादशाष्टौ वा यदि भवन्ति तदा तयो सवादित्वमित्यनेनाभिप्रायेणैवमुक्तम् । मतङ्गादिभिस्तु यो यस्य सवादी तस्यावस्थानश्रुतिमपि मध्ये गणयित्वा त्रयोदशनवान्तरत्वमुक्तमिति न कश्चिद्विसवाद । तत षड्जस्य मध्यमपञ्चमौ सवादिनौ, ऋषभस्य धवत, गाधारस्य निषाद, मध्यमस्य षड्ज, पञ्चमस्य षड्ज, धैवतस्यर्षभ, निषादस्य गाधार इति । ननु सवादित्वेन क उपयोग ? ब्रूम — यस्मिन्गीते यो ऽशत्वेन परिकल्पित षड्जस्तस्य स्थाने मध्यम क्रियमाणा जातिरागनाशको न भवति, यस्मिन्वा ऽशत्वेन मूर्च्छनावशान्मध्यम प्रयुक्तस्तस्य स्थाने षड्ज प्रयुज्यमानो जातिरागनाशको न भवति, षड्जपञ्चमयो स्थाने पञ्चमषड्जौ प्रयुज्यमानौ जातिरागहानिकरौ न भवत, एवमृषभधैवतयो स्थाने धैवतर्षभौ प्रयुज्यमानौ जातिरागविनाशकरौ न भवत, गाधारनिषादयो स्थाने निषादगाधारौ प्रयुज्यमानौ जातिरागहानि न कुरुत इति । विवादिलक्षणमाह—निगाविति । निषादगाधारावन्येषा सर्वेषा स्वराणा विवादिनौ । पक्षान्तरमाह—रिधयोरिति । तौ निषादगाधारावृषभधैवतयोरेव विवादिनाविति । तृतीय पक्षमाह—तयोरिति । तयोर्निषादगाधारयोर्ऋषभधैवतौ विवादिनाविति । मतङ्गेन तु द्विश्रुत्यन्तरितत्वेन विवादित्वमुक्तम्, यदाह 'द्व्यन्तरौ तु स्वरौ विवादिनौ ' इति । ननु किमिद विवादित्वम् ? ब्रूम —वाद्यादिभि स्वरैर्यद्रागस्य वादित्व सवादित्वमनुवादित्व वा प्राप्त तद्विनाशकत्व नाम विवादित्वम् । ततश्चर्षभस्थाने यदा गाधार प्रयुज्यते गाधारस्थाने वर्षभस्तदा जातिरागहानिर्भवति । अनुवादिलक्षण कथयति—शेषाणामिति । येषा परस्पर सवादित्व विवादित्व वा नास्ति तेषामनुवादित्वम् । मतङ्गेन त्वेकश्रुत्यन्तरहीनत्वेनानु-

नृपामात्यानुसारित्वादनुवादी तु भृत्यवत् ॥ ५१ ॥
गीर्वाणकुलसभूताः षड्जगाधारमध्यमाः ।

वादित्वमुक्तम् । नन्वनुवादी स्वर किमनुवदति ? यद्वादिना रागस्य रागत्व सपादित तत्प्रतिपादकत्व नामानुवादित्वम् । ततश्च षड्जस्थाने ऋषभ प्रयुज्यमान ऋषभस्थाने च षड्ज प्रयुज्यमानो जातिरागविनाशकरो न भवति, पञ्चमस्थाने धैवत प्रयुज्यमानो धैवतस्थाने च पञ्चम प्रयुज्यमानो जातिरागविनाशकरो न भवति, षड्जस्थाने धैवत प्रयुज्यमानो धैवतस्थाने च षड्ज प्रयुज्यमानो जातिरागविनाशकरो न भवति, तथा पञ्चमस्थान ऋषभ प्रयुज्यमान ऋषभस्थाने च पञ्चम प्रयुज्यमानो जातिरागविनाशकरो न भवति, मध्यमस्थान ऋषभ ऋषभस्थाने च मध्यमस्तथा धैवतस्थाने मध्यमो मध्यमस्थाने च धैवत प्रयुज्यमानो जातिरागनाशको न भवतीति । ऋषभगाधारयोश्चैकश्रुत्यन्तरहीनत्वेनानुवादित्वे प्राप्ते द्वयन्तरत्वाद्विवादित्वम् । एव षड्जग्रामे वादिसवादिविवाद्यनुवादिविचार । एवमेव मध्यमग्रामे ऽपि पञ्चमस्य तृतीयश्रुत्यवस्थितत्वात्कचिद्विकृतो ऽयमेव विचारो बोद्धव्य । तत्र षड्जस्य सवादी मध्यम , ऋषभस्य धैवतपञ्चमौ, गाधारस्य निषाद , मध्यमस्य षड्जनिषादौ, पञ्चमस्यर्षभ , धैवतस्यर्षभ , निषादस्य गाधारमध्यमाविति । विवादित्व ग्रामद्वये ऽपि समानमेव । षड्जस्य पञ्चमधैवतर्षभा अनुवादिन , ऋषभस्य षड्जमध्यमौ , गाधारनिषादयो सर्वविवादित्वादनुवादित्व नास्ति, मध्यमस्यर्षभधैवतौ, पञ्चमस्य मध्यमधैवतौ, धैवतस्य मध्यमपञ्चमाविति ज्ञातव्यम् । एतेषा वाद्यादीना प्रधानगुणभावमाह—**वादी राजेति** । यथा राजा मुख्यस्तथा वादी, अन्येषा तदनुसारित्वात् । सवादी त्वस्य वादिन प्रधानपुरुषतुल्य , कुत ? अनुसारित्वात्सहवृत्ते , अत एवामा सह वसतीत्यमात्य इत्यमात्यशब्देनाभिधीयते । विवादी तु रिपुतुल्यो विपरीतत्वात्, अननुसारित्वादित्यर्थ । अनुवादी सेवकवत्, नृपो वादी, अमात्य सवादी, तदनुसारित्वात् । भृत्यो ऽप्युभयानुसारी भवति ॥ -४६—५१ ॥

(क०) ज्ञात्वा प्रयोगे ऽदृष्टातिशयो ऽप्यस्तीति स्वराणा कुलादीन्युद्देशक्रमेणाह—**गीर्वाणकुलेत्यादिना** ॥ ५२— ५९- ॥

पञ्चम पितृवशोत्थो रिधावृषिकुलोद्भवौ ॥ ५२ ॥
निषादो ऽसुरवशोत्थो ब्राह्मणा समपञ्चमा ।
रिधौ तु क्षत्रियौ ज्ञेयौ वैश्यजाती निगौ मतौ ॥ ५३ ॥
शूद्रावन्तरकाकल्यौ स्वरौ वर्णास्त्विमे क्रमात ।
पद्माभः पिञ्जरः स्वर्णवर्णः कुन्दप्रभो ऽसितः ॥ ५४ ॥
पीतः कर्बुर इत्येषा जन्मभूमीरथ ब्रुवे ।
जम्बूशाककुशक्रौञ्चशाल्मलीश्वेतनामसु ॥ ५५ ॥
द्वीपेषु पुष्करे चैते जाता. षड्जादय क्रमात् ।
वह्निर्वेधा. शशाङ्कश्च लक्ष्मीकान्तश्च नारद ॥ ५६ ॥
ऋषयो ददृशु पञ्च षड्जादींस्तुम्बुरुर्धनी ।
वह्निब्रह्मसरस्वत्यः शर्वश्रीशगणेश्वराः ॥ ५७ ॥
सहस्रांशुरिति प्रोक्ता' क्रमात्षड्जादिदेवता ।
क्रमादनुष्टुब्गायत्री त्रिष्टुप्च बृहती ततः ॥ ५८ ॥
पङ्क्तिरुष्णिक्च जगतीत्याहुश्छन्दांसि सादिषु ।
सरी वीरे ऽद्भुते रौद्रे धो बीभत्से भयानके ॥ ५९ ॥
कार्यौ गनी तु करुणे हास्यशृङ्गारयोर्मपौ ।

(सु०) इदानीं षड्जादीना स्वराणा कुलानि कथयति- -गीर्वाणेति । षड्जगाधारमध्यमास्त्रय सुरवशसमुत्पन्ना , पञ्चम पितृवशोद्भव , ऋषभ-धैवतावृषिवशोद्भवौ, निषादो ऽसुरवश्य । इदानीं ब्राह्मणत्वादिवर्णविशेष कथयति—ब्राह्मणा इति । षड्जमध्यमपञ्चमा ब्राह्मणा , ऋषभधैवतौ क्षत्रियौ, निषादगाधारौ वैश्यौ, अन्तरकाकल्यौ शूद्रौ । तयोस्तु लक्षण मूर्च्छनाप्रकरणे वक्ष्यति ॥ ९१–९२- ॥ अधुना तु सितादिवर्णविशेष कथयति—पद्माभ इति । पद्माभो रक्तवर्ण षड्ज , ऋषभस्तु पिञ्जर ईषत्पीतवर्ण , गाधार स्वर्ण-वर्णो ऽतिपीतवर्ण , मध्यम कुन्दवर्ण शुभ्र , पञ्चमो ऽसित कृष्णवर्ण ,

धैवत पीतवर्ण , निषाद कर्बुरो विचित्रवर्ण ॥ ९४ ॥ अधुना ऽमूना स्वराणा जन्मभूमी प्रतिज्ञाय कथयति—एषा जन्मभूमीरिति । जम्बूद्वीपे षड्ज-स्योत्पत्ति , शाकद्वीप ऋषभस्य, कुशद्वीपे गाधारस्य, क्रौञ्चद्वीपे मध्यमस्य, शाल्मलीद्वीपे पञ्चमस्य, श्वेतद्वीपे धैवतस्य, पुष्करद्वीपे निषादस्य । नन्विद द्वीपोत्पत्तिकथन कुत्रोपयुज्यते ? स्वराणा सप्तत्वनिश्चय इति ब्रूम । तथा चोक्त मतङ्गेन—'ननु कथ सप्त स्वरा इति नियम ? उच्यते—यथा सप्तधात्वाश्रि-तत्वेन सप्तैव धातवो रसादयो ज्ञेया , तथा चाह सुश्रुत —

'त्वगसृड्मासमेदोऽस्थिमज्जशुक्रानि धातव ।'

इति, तथा सप्तचक्राश्रितत्वेन सप्तद्वीपाश्रितत्वेन वा सप्तैव स्वरा इति । ननु काकल्यन्तरयोरपि स्वरान्तरयो सद्भावात्कथ सप्तैव स्वरा इति नियम सिध्यति ? नव स्वरा इति हि वक्तव्यम्, मैवम्, अनशत्वादनयो स्वरान्तरत्व नास्ति, विकृतनिषादस्यैव काकलीत्व विकृतगाधारस्यैवान्तरत्वम् । तथा चोक्त दत्तिलेन—

'निषाद काकलीसज्ञो द्विश्रुत्युत्कर्षणाद्भवेत् ।
गाधारस्तद्वदेव स्यादन्तरस्वरसज्ञित ॥
अनशत्वात्तु भेदेन स्वरत्व नोच्यते तयो ।
अतो निषादगाधारावेतावाद्यैरुदाहृतौ ॥'

इति ॥ ९५, ९५- ॥ अथ स्वराणा द्रष्टॄनृषीन्कथयति—वह्निरिति । षड्जस्य-र्षिर्वह्नि , ऋषभस्य ब्रह्मा, गाधारस्य चन्द्र , मध्यमस्य विष्णु , पञ्चमस्य नारद , धैवतनिषादयोस्तुम्बुरु ॥ -९६, ९६- ॥ देवता कथयति—वह्नीति ॥ -९७, ९७- ॥ छन्दासि कथयति—क्रमादनुष्टुबिति । ननु स्वराणाम् 'पद्माभ-' इत्यादि वर्णनिरूपणमृषिदैवतच्छन्दोनिरूपण च कुत्रोपयुज्यते ? स्वरोपासना-यामित्यवेहि । यदा स्वराणा बीजै षड्जादय स्वरा उपास्यन्ते तदा तेषामृषि-देवताच्छन्दासि स्मर्तव्यानि, वर्णाश्च ध्येया । अत एव स्वराणा बीजान्युक्तानि मतङ्गेन । यथा—

'वर्गाष्टक तु सप्राप्य अकारादि यशान्तकम् ।
वर्णमात्रासमायुक्तमुद्धरेत्स्वरसप्तकम् ॥

अष्टमस्य तृतीय तु हरिबीजसमन्वितम् ।
आद्य स्वर स्वरज्ञस्तु उद्धरेत्स प्रयत्नत ॥
सप्तमस्य द्वितीय तु कामबीजसमन्वितम् ।
उद्धरेत्तु स्वर नित्य सौरभेय[1] मनोहरम् ॥
द्वितीयस्य तृतीय तु हरिबीजसमन्वितम् ।
समुद्धरेत्तृतीय त सरस स्वरमुत्तमम् ॥
षष्ठस्यापि हि वर्गस्य अन्तिम चादिसयुतम् ।
अविनष्ट विजानीयान्मध्यमस्वरमुत्तमम् ॥
तदादि प्रथमोपेत स्वर सविद्धि शोभनम् ।
व्योमसख्यासमायुक्तमोष्ठस्थानसमुद्भवम् ॥
पञ्चमस्यापि वर्गस्य चतुर्थ चादिभूषितम् ।
कोदण्डद्वयसभूतमुद्धरेत्स्वरमुत्तमम ॥
अकारान्तान्तसभिन्न पञ्चमान्त समुद्धरेत् ।
ब्रह्मस्थानसमुद्भूत सुतारध्वनिसयुतम् ॥
आगमस्थ स्वरोद्धार एव तावत्प्रदर्शित ।'

इति ॥ ९८, ९८- ॥ अथ स्वराणा रसव्यञ्जकनियममाह—सरी इति । षड्जर्षभौ वीराद्भुतरौद्रेषु, धैवतो बीभत्सभयानकयो , गाधारनिषादौ करुणे, मध्यमपञ्चमौ हास्यशृङ्गारयोरिति ॥ ९९, ९९- ॥

**इति प्रथमे स्वरगताध्याये नादस्थानश्रुतिस्वरजातिकुलदैवत र्षिच्छन्दोरसप्रकरणम् ॥ ३ ॥**

---

[1] 'सौरभेयमृषभम्' इति सुधाटिप्पणी

# अथ चतुर्थ ग्राममूर्च्छनाक्रमतानप्रकरणम्

**ग्रामः स्वरसमूहः स्यान्मूर्च्छनाऽऽदेः समाश्रयः[1] ।**
**तौ द्वौ धरातले तत्र स्यात्षड्जग्राम आदिम ॥ १ ॥**
**द्वितीयो मध्यमग्रामस्तयोर्लक्षणमुच्यते ।**
**षड्जग्राम पञ्चमे स्वचतुर्थश्रुतिसस्थिते ॥ २ ॥**

(क०) एव स्वरान्निरूप्य व्यस्ताना तेषा दृष्टादृष्टफलोपयोगित्व नास्तीति तत्सिद्धये नियतसमस्तस्वरसनिवेशरूपान्मूर्च्छनाऽऽदीन्निरूपयिष्य-स्तदाश्रयत्वाद्व्यवस्थापकत्वाच्च ग्रामयो प्रसक्तयोस्तत्सामान्यलक्षण ताव-दाह—**ग्राम** इति । ग्रामवद् ग्राम । यथा लोके जनसमूहो ग्राम इत्युच्यते, एवमत्र स्वरसमूहो ग्राम इति विवक्षित । स्वरसमूहो ग्राम इत्येतावत्युच्य-माने लौकिकवैदिकवाक्येष्वपि स्वरसमूहत्वसभवात्तत्रातिव्याप्ति स्याल्लक्षणस्य । तद्व्यावृत्त्यर्थं मूर्च्छनाऽऽदे समाश्रय इति विशेषणम् । अत्रादिशब्देन क्रमतान-वर्णालकारजात्यादयो गृह्यन्ते । सामान्यलक्षणे ग्राम इति जातावेकत्वनिर्दे-शादविशेषेण सप्तानामपि स्वराणा ग्रामविशेषणत्वे प्राप्ते, त्रयाणामेव तद्विशेष-णत्वमवगमयन्ग्रामविशेषलक्षणानि लोकव्यवस्थापूर्वकमाह—**तौ द्वावित्यादि-**ना । ननु समूहित्वाविशेषेण सप्तानामपि ग्रामव्यपदेशकत्वसभवे कथ धरातले द्वावित्यवधारणमिति चेत्तत्रोच्यते—शुद्धविकृतरूपेण द्विविधस्वरप्रयोगवशात्,

'द्वौ ग्रामौ विश्रुतौ लोके षड्जमध्यमसज्ञकौ'

इति मुनिवचनाच्च शुद्धाश्रयत्वात्षड्जग्राम आदिमो विकृताश्रयत्वाद्द्वितीयो मध्यमग्राम इत्युपपद्यत इति । **स्वचतुर्थश्रुतिसस्थित** इति । स्वकीय-

[1] ०मूर्च्छनादिसमाश्रय

स्वोपान्त्यश्रुतिसस्थे ऽस्मिन्मध्यमग्राम इष्यते ।
यद्वा धस्त्रिश्रुतिः षड्जे मध्यमे तु चतुःश्रुतिः ॥ ३ ॥
रिमयो श्रुतिमेकैका गाधारश्चेत्समाश्रितः ।
पश्रुति धो निषादस्तु धश्रुति सश्रुतिं श्रितः ॥ ४ ॥
गाधारग्राममाचष्ट तदा त नारदो मुनिः ।
प्रवर्तते स्वर्गलोके ग्रामो ऽसौ न महीतले ॥ ५ ॥

चतुर्थश्रुतौ करुणाजातिभेद आलापिन्यामादित सप्तदश्या स्थिते सति षड्जग्राम । **स्वोपान्त्यश्रुतिसस्थ** इति । स्वोपान्त्यश्रुतावायताभेदे सदीपन्या षोडश्या सतिष्ठत इति सस्थ, तस्मिन् । अत्र चतुर्थश्रुतिसस्थित इत्युपान्त्यश्रुतिसस्थ इति चैतावत्युक्ते, मध्यमग्रामे मध्यमसाधारणे पञ्चमस्य चतु श्रुतिकत्वेन स्वतृतीयश्रुतिसस्थस्यापि मध्यमान्तिमश्रुतिसाहित्येन चतुर्थे श्रुतिसस्थत्वम्, तस्यामवस्थाया स्वद्वितीयश्रुतेरुपान्त्यत्वेनोपान्त्यश्रुतिसस्थत्व च सभवतीति तन्निवृत्त्यर्थमुभयत्र स्वशब्दोपादान कृतम्, तयोस्तृतीय द्वितीययो श्रुत्यो स्वकीयत्वेन रूपेण चतुर्थत्वोपान्त्यत्वाभावात् । यद्वेत्य भ्युच्चयपक्ष । कुत ? पञ्चमभेदायत्तत्वेन ग्रामभेदे सिद्धे ग्रामभेदाश्रयणेन धैवतभेदकथनात्, धैवतस्य पञ्चमसनिधान विना स्वगतभेदाप्रतीते स्वतो ग्रामभेदकत्वाभावाच्च । भेदकत्वकथन तु धैवत पञ्चमान्त्यश्रुतिलाभाच्चतु - श्रुतिर्विकृत सस्तदलाभे शुद्धश्च सन्साक्षाल्लक्षणस्य पञ्चमस्य क्रमात्त्रिश्रुतित्व चतु श्रुतित्व चावगमयन्ग्रामयोरुपलक्षण भवतीति ॥ १—५ ॥

(सु०) ग्रामनिरूपणार्थमाह—ग्राम स्वरसमूह इति । स्वराणा समूहो ग्रामशब्देनोच्यते । ननु कथ स्वरसमूहस्य ग्रामशब्दवाच्यत्वम्? उच्यते—यतो मूर्च्छनाऽऽदे समाश्रयभूत, अत स्वरसमूहो ग्राम । लोकाश्रयभूतो हि ग्राम इत्युच्यते । तदुक्त मतङ्गेन—

'यथा कुटुम्बिन सर्वे एकीभूता वसन्ति हि ।
[1] सर्वलोकस्य स ग्रामो यत्र नित्य व्यवस्थिति ॥'

इति । अथ वा स्वरसमूहस्य ग्रामत्वे ऽव्यवस्थयोच्चारितस्यापि स्वरसमूहस्य ग्रामत्व स्यात्, तन्निवृत्त्यर्थमुक्त मूर्च्छनाऽऽदिसमाश्रय इति । यस्तु मूर्च्छनाऽऽदीनामाश्रय स्वरसमूह स एव ग्रामशब्देनोच्यते, नाव्यवस्थयोच्चारित स्वरसमूह इत्यर्थ । तथा चोक्त सगीतसमयसारकारेण—

'स्वराणा मूर्च्छनातानजातिजात्यशकात्मनाम् ।
व्यवस्थितश्रुतीना हि समूहो ग्राम इष्यते ॥'

इति । तस्य भेदावाह—**तौ द्वाविति** । ननु त्रयो ग्रामा इति प्रसिद्धि , कथ द्वावित्युच्यते ? अत आह—**धरातल** इति । तत्र तयोर्मध्ये षड्जग्राम आदिमो मुख्य । द्वितीयो मध्यमग्राम । अत एव मतङ्गेनोक्तम्—

'उभयोर्ग्रामयोर्मध्ये मुख्यत्व कस्य गण्यते ।
षड्जस्यैव हि मुख्यत्व [2]गम्यते वचनान्मुने ॥'

इति । तयोर्लक्षण प्रतिज्ञाय कथयति—**तयोरिति** । पञ्चमे स्वरे स्वकीया या चतुर्थी श्रुतिर्यस्यामसौ स्थापितस्तत्स्थे ऽविकृते षड्जग्राम । यद्यपि षड्जग्रामे ऽन्येषामपि षड्जादीना स्वराणामविकृतत्व तथा ऽपि पञ्चमस्यैवाविकृतत्वकथन मध्यमग्रामे पञ्चमस्य विकृतत्वात्तद्वैलक्षण्यप्रतिपादनार्थम् । मध्यमग्रामलक्षण कथयति—**स्वोपान्त्येति** । स्वस्योपान्त्या ऽन्त्याया श्रुते समीपे वर्तमाना या तृतीया श्रुतिस्तत्र सस्थिते ऽस्मिन्पञ्चमे मध्यमग्रामो भवति । यद्यपि धैवतस्य प्रथमा श्रुति पञ्चमस्यान्त्यश्रुते समीपवर्तिनी भवति, तथा ऽपि सा स्वकीया न भवतीति तन्निवृत्त्यर्थ स्वेत्युक्तम् । इदमेव लक्षण प्रकारान्तरेण कथयति—**यद्वेति** । धो धैवत षड्जग्रामे त्रिश्रुति , मध्यमग्रामे तु पञ्चमस्यान्तिमा श्रुति लब्ध्वा चतु श्रुति । अथस्तु स एव । कि तु पूर्व पञ्चमस्वरप्राधान्येनोभयोर्लक्षण-

[1] सर्वलोकेषु
[2] गण्यते

षड्जः प्रधानमाद्यत्वादमात्याधिक्यतस्तथा ।
ग्रामे स्यादविलोपित्वान्मध्यमस्तु पुरःसर ॥ ६ ॥
एतत्कुलप्रसूतत्वाद्गाधारो ऽप्यग्रणीर्दिवि ।
क्रमाद् ग्रामत्रये देवा ब्रह्मविष्णुमहेश्वराः ॥ ७ ॥
हेमन्तग्रीष्मवर्षासु गातव्यास्ते यथाक्रमम् ।
पूर्वाह्णकाले मध्याह्ने ऽपराह्णे ऽभ्युदयार्थिभिः ॥ ८ ॥

मुक्तम्, इद तु धैवतप्राधान्येन । [1] धैवतप्रधान्यनिरूपणाद्यत्पूर्वोक्त लक्षणम समतमिव भाति तत्परमते, न तु स्वमते । अत एव पञ्चमरहिताना कूटतानाना भेदकपञ्चमाभावादेव पौनरुक्त्य वक्ष्यति, न धैवताभावेन पौनरुक्त्यमिति । गाधारग्रामस्य क्षितितले ऽनुपयोगे ऽपि शास्त्रस्य सर्वविषयत्वात्तल्लक्षण कथयति—रिमयोरिति । गाधार ऋषभस्यान्तिमा श्रुति मध्यमस्य चादिमा श्रुतिमाश्रित सश्चतु श्रुतिर्भवति । धैवतस्तु पञ्चमस्यान्तिमा श्रुतिमाश्रयति । निषादश्च धैवतस्यान्तिमा श्रुतिं गृहीत्वा षड्जस्य चादिमा श्रुति समाश्रित सश्चतु श्रुतिर्भवति । तदा त गाधारग्राम नारदो मुनिराचष्ट । नारदकथन प्राशस्त्यार्थ न तु स्वमते ऽन्यथात्वप्रकटनार्थम् ॥ १—९ ॥

(क०) ननु स्वरप्रयोगवशादिह द्वावेव ग्रामौ स्याताम्, स्वरान्तरेषु सत्सु किं तयो षड्जमध्यमविशेषणेनेत्याशङ्क्य तत्रोपपत्तिमाह—षड्ज प्रधानमिति । अमात्याधिक्यत, सवादिस्वरबाहुल्यादित्यर्थ । ग्रामे प्रधान स्यादित्यन्वय । अविलोपित्वादिति । मध्यमस्याविलोपित्व चाधस्तनाना सरिगाणामुपरितनाना पधनीना च यथासख्य द्वयोर्द्वयोरेकत्र तन्त्र्या सवदन सवाद इति मतानुसारेणैकाकिनो मध्यमस्यान्येन सवादाभावात्परिशेषाद वधिभूतस्य तस्य लोपो नेष्यत इति केषाचिन्मतम् । अन्येषा तु शुद्धतान-

[1] धैवतप्राधान्यनिरूपण च समत परमतत्वेन, न तु स्वमतत्वेन ।

**क्रमात्स्वराणा सप्तानामारोहश्चावरोहणम् ।**

लक्षणावसरे षड्जर्षभनिषादपञ्चमहीनाश्चत्वारस्ताना इत्यादिना भरतादिभिर्मध्यमव्यतिरिक्तानामेव षाडवौडुवकारित्वेन लोपविधानान्मध्यमस्याविनाशित्वमिति ॥ ६—८ ॥

(सु०) ननु कथ षड्जमध्यमगाधाराणामेव ग्रामत्वव्यपदेशो नान्येषा स्वराणामत आह—**षड्ज** इति । षड्ज सर्वेषा स्वराणामाद्य, तस्मात्प्रधान मुख्य । अन्यदपि प्राधान्ये कारणमाह—**अमात्याधिक्यत** इति । अमात्या सवादिन, तेषामाधिक्यमन्यस्वरापेक्षया । अन्येषा स्वराणामेकैक एव स्वर सवादी, षड्जस्य तु मध्यमपञ्चमौ द्वौ सवादिनौ । मध्यमो ऽपि ग्रामे पुर सर आद्य, ग्रामव्यपदेशभाग्भवतीति यावत् । कारणमाह—**अविलोपित्वादिति** । षाडवितत्व औडुवितत्वे च मध्यमस्य लोपो नास्ति । तस्मात्सो ऽपि प्रधानम् । एतयो षड्जमध्यमयो कुले देवकुल उत्पन्नत्वाद्गाधारो ऽपि स्वर्गलोके स्वराणामग्रणीर्गाद्यो ग्रामव्यपदेशभाक् । अत एवोक्त मतङ्गेन—'ननु कथ षड्जमध्यमस्वराभ्या ग्रामव्यपदेश ? उच्यते—असाधारणत्वेन ताभ्या ग्रामव्यपदेश । असाधारणत्व च देवकुलोत्पन्नत्वेन ।' इति । मध्यमस्याविलोपित्वमुक्त दत्तिलेन—

'पञ्चम मध्यमग्रामे षड्जग्रामे तु धैवतम् ।
अलोपिन विजानीयात्सर्वत्रैव तु मध्यमम् ॥'

इति । ग्रामत्रये ऽप्यधिष्ठातॄन्देवान्कथयति—**क्रमादिति** । गान ऋतुनियम कथयति—**हेमन्तेति** । ऋतुविशेषेष्वपि पूर्वाह्णादिकालविशेष गाने नियमयति—**पूर्वाह्णेति** । ऋतुविशेषेष्वप्यभ्युदयार्थिभिरिति फलस्य कथितत्वान्नियमे फलमनियमे न दोष । ग्रामनिरूपणप्रयोजनमुक्त मतङ्गेन—'स्वरश्रुतिमूर्च्छनातानजातिरागाणा व्यवस्थापकत्व नाम प्रयोजनम्' इति ॥ ६—८ ॥ इति ग्रामप्रकरणम् ॥

(क०) ग्रामलक्षणे तदाधेयत्वेन प्रथमोपात्ताना मूर्च्छनाना सामान्यलक्षणमाह—**क्रमात्स्वराणामिति** । क्रमादिति कूटतानव्यावृत्त्यर्थम् । सप्ताना

मूर्च्छनेत्युच्यते ग्रामद्वये ताः सप्त सप्त च ॥ ९ ॥
षड्जे तूत्तरमन्द्रा ऽऽदौ रजनी चोत्तरायता ।
शुद्धषड्जा [1]मत्सरीकृदश्वक्रान्ता ऽभिरुद्गता ॥ १० ॥
मध्यमे स्यात्तु सौवीरी हारिणाश्वा ततः परम् ।
स्यात्कलोपनता शुद्धमध्या मार्गी च पौरवी ॥ ११ ॥
हृष्यकेत्यथ तासा तु लक्षण प्रतिपाद्यते ।

स्वराणामिति शुद्धतानव्यावृत्त्यर्थम् । आरोहश्चावरोहणमित्यारोह्यवरोहिद्वि विधवर्णालकारनिवृत्त्यर्थम् । **मूर्च्छने**ति । यया करणभूतया रागो मूर्च्छ्यते व्याप्यत इति, श्रोता मूर्च्छ्यते मोह्यत इति वा 'मुर्छा मोहसमुच्छ्राययो ' इति धातोर्ण्यन्ताद्युचि प्रत्यये मूर्च्छनेति रूपम् । यदि पुनर्मतङ्गनन्दिकेश्व-रादिभि प्रयोगे स्थानत्रयव्याप्तिसिद्ध्यर्थ लक्ष्यानुरोधेन द्वादशस्वरमूर्च्छना अप्युक्ता , एवमपि लक्ष्ये प्रायेण ग्रामद्वयसस्पृष्टप्रयोगदर्शनात्तेनैव स्थानत्रय व्याप्ति सेत्स्यतीत्यभिप्रायेण न पृथगुक्ता । तद्विशेषान्ग्रामद्वय ऽपि व्यव हारार्थं नामतो रूपतश्च सख्यापूर्वक दर्शयति—**ग्रामद्वय** इत्यादिना । मूर्च्छ नेति जातिविवक्षयैकत्वे प्रकृते ऽपि ता इति बहुवचनेन परामर्शो वक्ष्य माणतद्विशेषापेक्षयेत्युपपद्यते । मध्यस्थानस्थषड्जेनाग्रिमा मूर्च्छनोत्तरमन्द्रा ऽऽरभ्यते । कुतो ऽय नियम.[2] भरतादिनियमितत्वात्तासाम् । यथा ऽऽह भरत 'मध्यमस्वरेण वैणवेन मूर्च्छनानिर्देश ' इति , मतङ्गो ऽपि 'मध्य सप्तकेन मूर्च्छनानिर्देश कार्यो मन्द्रतारसिद्ध्यर्थम्' इति ॥ ९—११ ॥

(सु०) मूर्च्छना निरूपयति—क्रमादिति । सप्ताना स्वराणामारोहश्चाव-रोहण च मूर्च्छनेत्युच्यते । आरोहावरोहणशब्देन तद्युक्ता स्वरा उच्यन्ते ।

[1] मत्सरीकृता ऽश्वक्रान्ता

**मध्यस्थानस्थषड्जेन मूर्च्छना ऽऽरभ्यते ऽग्रिमा ॥ १२ ॥**
**अधस्तनैर्निषादाद्यै षडन्या मूर्च्छना क्रमात् ।**
**मध्यमध्यममारभ्य सौवीरी मूर्च्छना भवेत् ॥ १३ ॥**
**षडन्यास्तदधोऽध.स्थस्वरानारभ्य तु क्रमात् ।**
**षड्जस्थानस्थितैर्न्याद्यै रजन्याद्याः परे विदुः ॥ १४ ॥**
**हारिणाश्वादिका गाद्यैर्मध्यमस्थानसस्थितै ।**

ततश्चारूढा अवरूढाश्च क्रमत सप्त स्वरा मूर्च्छनाशब्दवाच्या । मूर्च्छनाशब्द-व्युत्पत्ति कथिता मतङ्गेन—

'मूर्च्छनाशब्दनिष्पत्तिर्मूर्च्छा मोहे समुच्छ्ये ।
मूर्च्छ्यते येन रागो हि मूर्च्छनेत्यभिसञ्ज्ञिता ॥'

इति । स्वराणामेव मूर्च्छनात्व न त्वारोहणावरोहणरूपाया क्रियाया इत्यप्युक्त तेनैव—

'आरोहणावरोहणक्रमेण स्वरसप्तकम् ।
मूर्च्छनाशब्दवाच्य हि विज्ञेय तद्विचक्षण ॥'

इति । सप्ताना स्वराणामित्युपलक्षणम्, द्वादशस्वराणामपि मूर्च्छनाना मतङ्गेन प्रतिपादितत्वात् । तासा भेदान्कथयति—**ग्रामद्वय** इति । षड्जग्रामे सप्त मूर्च्छना, मध्यमग्रामे च सप्त भवन्ति । तासा नामानि कथयति—**षड्ज** इति । षड्जग्रामे प्रथमा मूर्च्छनोत्तरमन्द्रा, द्वितीया रजनी, तृतीयोत्तरायता, चतुर्थी शुद्धषड्जा, पञ्चमी मत्सरीकृता, षष्ठयश्वक्रान्ता, सप्तम्यभिरुद्गता । मध्यमग्रामे प्रथमा सौवीरी, द्वितीया हारिणाश्वा, तृतीया कलोपनता, चतुर्थी शुद्धमध्या, पञ्चमी मार्गी, षष्ठी पौरवी, सप्तमी हृष्यकेति ॥ ९—११- ॥

(क०) अधस्तनैर्मन्द्रस्थानभवै । तदधोऽध स्थस्वरान्, तस्य मध्य स्थानस्थितमध्यमस्याधोऽध स्था गाधारर्षभादय स्वरा, तान् । क्रमादवरोहक्रमेण । लक्ष्यानुरोधेन पक्षान्तरमाह—**षड्जस्थानस्थितैरि**ति । मध्य-

स्थानस्थितषड्जस्थानगतैरिति प्रकरणादवगन्तव्यम् । सरिगमपधनीत्युत्तर मन्द्रास्वरस्थानेष्वेव निसरिगमपधेति रजनीम्वरानुच्चारयेदित्यर्थ ॥ **हारिणा-श्वादिका** इति । अत्रापि मध्यस्थानस्थितमध्यममारभ्य मपधनिसरिगेति सौवीरीस्वरस्थानेष्वेव गमपधनिसरीति हारिणाश्वास्वरानुच्चारयदित्यर्थ । उभयत्राप्यादिशब्देन षड्जमध्यमस्थानयोरेव तत्तन्मूर्च्छनाऽऽदिमस्वरारम्भो द्रष्टव्य ॥ -१२—१४- ॥

(सु०) श्रोत्रवधानार्थं वैषम्यद्योतनाय चेतासा लक्षण प्रतिज्ञाय कथयति— **अथ तासामिति** । मध्यस्थानस्थितेन षड्जेनाग्रिमा षड्जग्रामे प्रथमा मूर्च्छनोत्तर-मन्द्रा ऽऽरभ्यते । षड्जमारभ्य सप्तमस्वरपर्यन्तमारोहो निषादमारभ्य षड्ज-पर्यन्त चावरोह कार्य । अन्यास्तु षड्जन्यादयो मूर्च्छनास्तस्मान्मध्यस्थान स्थितात्षड्जादधो ऽपकृष्टस्थाने स्थिता ये मन्द्रनिपादधैवतादयो मन्द्रर्षभपयन्ता षट्, तानारभ्य कर्तव्या । मध्यमग्राममूर्च्छना लक्षयति— मध्यममध्यममिति । मध्यस्थानस्थित मध्यममारभ्य सौवीरी मध्यमग्रामे प्रथमा मूर्च्छना भवेत् । अन्यास्तु षड् हारिणाश्वादयस्तस्य मध्यस्थानस्थमध्यमस्याधो ऽधो ऽपकृष्टे स्थाने स्थिता स्वरा ये गाधारर्षभादयो मन्द्रपञ्चमपर्यन्ता, तानारभ्य कर्तव्या । ततश्चैव मूर्च्छनास्वरूप भवति— लिपौ बिन्दुशिरा मन्द्रो ज्ञातव्य, ऊर्ध्वरेखा-शिरास्तु तार, 'मन्द्रो बिन्दुशिरा भवेत् । ऊर्ध्वरेखास्तारो लिपौ' इति वक्ष्यमाणत्वात् । तत्र त्वारोहक्रम एव लिख्यते । अवरोहक्रमस्त्वन्तिमस्वराज्ज्ञा-तव्य । सरिगमपधनि—उत्तरमन्द्रा ॥ १ ॥ निसरिगमपध—रजनी ॥ २ ॥ धनिसरिगमप—उत्तरायता ॥ ३ ॥ पधनिसरिगम—शुद्धषड्जा ॥ ४ ॥ मप धनिसरिग—मत्सरीकृता ॥ ५ ॥ गमपधनिसरि—अश्वक्रान्ता ॥ ६ ॥ रिगमप-धनिस—अभिरुद्गता ॥ ७ ॥ मपधनिसरिग—सौवीरी ॥ १ ॥ गमपधनिसरि—हारिणाश्वा ॥ २ ॥ रिगमपधनिस—कलोपनता ॥ ३ ॥ सरिगमपधनि—शुद्धमध्या ॥ ४ ॥ उत्तरमन्द्राया तु पञ्चमश्चतु श्रुति, अस्या तु त्रिश्रुतिरित्यन योर्भेद । निसरिगमपध—मार्गी ॥ ५ ॥ अस्या रजन्याश्च पूर्ववत्पञ्चमेन भेद । धनिसरिगमप—पौरवी ॥ ६ ॥ अस्या उत्तरायतायाश्च पूर्ववत्पञ्चमेन भेद ।

**षड्जादीन्मध्यमादींश्च तदूर्ध्वं सारयेत्क्रमात् ॥ १५ ॥**
**चतुर्धा ता. पृथक्शुद्धा [1]काकलीकलितास्तथा ।**
**सान्तरास्तद्द्वयोपेताः षट्पञ्चाशदितीरिता ॥ १६ ॥**

पधनिसरिगम—हृष्यका ॥ ७ ॥ अस्या शुद्धषड्जायाश्चापि पूर्ववत्पञ्चमेन भेद । मतान्तरेणान्यथैतासा लक्षणमाह—षड्जस्थानेति । निषादाद्यै स्वरै षड्जस्थानस्थितै रजन्याद्या भवन्ति । षड्जस्य स्थाने निषादे स्थाप्यमाने रजनी ॥२॥ धैवते स्थाप्यमान उत्तरायता ॥ ३ ॥ पञ्चमे स्थाप्यमाने शुद्धषड्जा ॥ ४ ॥ मध्यमे मत्सरीकृता ॥ ५ ॥ गाधारे ऽश्वक्रान्ता ॥ ६ ॥ ऋषभे ऽभिरुद्गता ॥ ७ ॥ एव मध्यमस्य स्थाने स्थाप्यमानैर्गाधाराद्यैर्हारिणाश्वाऽऽदयो भवन्ति । मध्यमस्य स्थाने गाधारे स्थाप्यमाने हारिणाश्वा ॥ २ ॥ ऋषभे स्थाप्यमाने कलोपनता ॥३॥ षड्जे स्थाप्यमाने शुद्धमध्या ॥ ४ ॥ निषादे मार्गी ॥ ५ ॥ धैवते पौरवी ॥ ६ ॥ पञ्चमे हृष्यका ॥ ७ ॥ इति ॥ -१२—१४ ॥

(क०) ननु षड्जमध्यमस्थानयोरेव निषादगाधारादिप्रयोगे सति षड्जग्राम उत्तरमन्द्रारजन्यादीना कथ परस्पर भेदो मध्यमग्रामे च सौवीरीहारिणाश्वाऽऽदिकाना च कथमन्योऽन्य भेद इत्याशङ्क्य परिहरिष्यन्नाह—**षड्जादीन्मध्यमादींश्चे**ति । **तदूर्ध्वमि**ति । रजन्यादिकाया षड्जस्थानस्थापितनिषादादेर्हारिणाश्वाऽऽदिकाया मध्यमस्थानस्थापितगाधारादेश्च पर षड्जादीन्मध्यमादींश्च स्वरान्सारयेत्, स्वस्वश्रुतिसख्यापर्यालोचनया श्रुत्यन्तराणि प्रापयेदित्यर्थ । **क्रमादि**ति । उत्तरायताया षड्जस्थाने धैवते स्थापिते तदूर्ध्व निषाद कलोपनताया मध्यमस्थान ऋषभे स्थापिते तदूर्ध्व गाधार चेत्यादि क्रम । तस्मान्मूर्च्छनाना शुद्धादिभेदेन प्रत्येक चातुर्विध्य दर्शयति—**चतुर्धे**ति । ग्रामयोरुक्ताश्चतुर्दश मूर्च्छनास्ता इति परामृश्यन्ते ।

[1] काकलीसहिता०

शुद्धा षड्जग्रामे सर्वस्वरविकाररहिता , मध्यमग्रामे तु ग्रामस्वरूपभेद निर्वर्तक पञ्चम तदुपलक्षक धैवत च विहायतरस्वरविकाररहिता । तत्र पञ्चमधैवतयोस्तादवस्थ्यमेव शुद्धत्व विवक्षितमिति मन्तव्यम् । ननु विकृत स्वरेषु यद्यपि पञ्चमस्य ग्रामभेदकत्वेनैव चरितार्थत्वे ऽपि, ऋषभधैवतयोश्च षड्जपञ्चमविकारायत्तविकारयो स्वतो भेदकत्वाभावे ऽपि, षड्जमध्यमसाधारणद्वयाश्रयणेनापि प्रकारान्तरेषु सभवत्सु केवल काकल्यन्तराश्रयणेनैव चतुर्धेति निश्चय कथमिति चेत् । सत्यम् , षड्जमध्यमयो साधारणी कृतयो स्वरूपेण भेदकत्वे सभवत्यपि काकल्यन्तरयो साधारणयोरन्तर्भूतत्वेन तयो पृथग्भेदकत्वम् । तथा चाह मतङ्ग —'साधारणस्वरौ निषादगाधारवन्तौ तदादिविकृतास्तत्रैवान्तर्भूता ' इति । कि च ग्रामद्वय मूर्च्छनासाधारणप्रकारभेदनिरूपणावसरे प्रतिनियतग्रामवर्तिनो षड्जमध्यमसाधारणयोरनुपयोगाच्च । यथोक्त भरतेन—'षडजग्रामे षड्जसाधारण मध्यमग्रामे मध्यमसाधारणम्' इति । अतश्चतुर्धेत्युपपद्यत इत्याचार्यरहस्यमसप्रदायविदुषा दुर्ग्रहम् ।

श्रुतिस्वरप्रमाणज्ञ कल्लिनाथ कलानिधि ।
चातुर्विध्य मूर्च्छनानामत्रैव निरदीधरत् ॥ १५, १६ ॥

(सु०) ननु षड्जस्थाने मध्यमस्थाने च यदि निषादादयो गाधारादयश्च स्थापितास्तदा षड्जमध्यमयो कुत्रावस्थानमत आह—षड्जादीनिति । षड्जर्षभगाधारादीन्मध्यमपञ्चमधैवतादींश्चोर्ध्व सारयेदुत्कृष्टेषु स्वरेषु स्थापयेत् । यदा निषाद षड्जस्थाने स्थापितस्तदा षड्ज ऋषभस्थान ऋषभो गाधारस्थान इत्यादि । यदा धैवत षड्जस्थाने तदा निषाद ऋषभस्थाने षड्जो गाधारस्थान इत्यादि स्वयमूह्यम् । ननु कथमन्यस्य स्वरस्यान्यस्वरस्थाने ऽवस्थानम्? ब्रूम , नाय मुख्यो व्यवहार , कि त्वौपचारिको ऽय व्यवहार । अथ वा, दत्तिलादिभिरङ्गीकृतत्वादेवमुच्यते । दत्तिलो हि स्वेच्छया यस्या कस्यामपि श्रुतौ

षड्ज स्थापयेत्तदपेक्षया च श्रुतिनियमेनान्यान्स्वरान्स्थापयेदित्युक्तवान् । यदाह—

‘षडजत्वेन गृहीतो य षड्जग्रामे ध्वनिर्भवेत् ।
तत ऊर्ध्वं तृतीय स्यादृषभो नात्र सशय ॥
ततो द्वितीयो गाधारश्चतुर्थो मध्यमस्तत ।
मध्यमात्पञ्चमस्तद्वत्तृतीयो धैवतस्तत ॥
निषादो ऽतो द्वितीय स्यात्तत षड्जश्चतुर्थक ।’

इति । विवृत चैतत्प्रयोगस्तबकाख्याया दत्तिलटीकायाम्—‘षड्जत्वेन षड्ज स्वरभावेन गृहीत परिकल्पितो बुद्ध्या व्यवस्थापितो य कश्चिद् ध्वनिविशेष षड्जाख्ये ग्रामे भवेत्तस्माद् ध्वनिविशेषादूर्ध्वं तृतीय स्यादृषभ’ इति । अनेनैवाभिप्रायेण दत्तिल षड्जग्राममूर्च्छनाना मध्यमग्राममूर्च्छनाना च किंचिद्विकारेणैक्यमुक्तवान् । यदाह—

‘गाधार धैवतीकुर्याद् द्विश्रुत्युत्कर्षणाद्यदि ।
तद्वशान्मध्यमादींश्च निषादादीन्यथा स्थितान् ॥
ततो ऽभूद्यावतिथ्येषा षड्जग्रामस्य मूर्च्छना ।
जायते तावतिथ्येव मध्यमग्राममूर्च्छना ॥
श्रुतिद्वयापकर्षेण गाधारीकृत्य धैवतम् ।
पूर्ववन्मध्यमाद्याश्च भावयेत्षड्जमूर्च्छना ॥’

इति । स्वेच्छया षड्जावस्थापनमङ्गीकृत्यैव दत्तिलदक्षप्रजापत्यादयो ऽवधान गाधर्वाङ्गत्वेनाङ्गयकार्षु । यदाह दत्तिल —

‘पदस्थ स्वरसघातस्तालेन सुमितस्तथा ।
प्रयुक्तश्चावधानेन गाधर्वमभिधीयते ॥’

इति । दक्षप्रजापतिरपि—

‘अवधानानि गाधर्व पश्चात्स्वरपदादय ।
अवधानातिरेकेण त्रिविध नोपपद्यते ॥

इत्याह । अवधान नाम मनोबुद्धिस्मृतीन्द्रियाणामैकाग्रयम् । षड्जो यत्र स्थापित-स्तदपेक्षयैवान्येषा स्वराणामुच्चारणमिति यावत् । यदि स्वरा स्वेच्छया नावस्थाप्यन्ते तदा ऽवधान नोपयुज्येत । शार्ङ्गदेवेनापि चलवीणाया सारणानिरूपणेनाय पक्ष किंचित्स्वीकृत एव, 'स्वोपान्त्यतन्त्रीमानेयास्तस्या सप्त स्वरा बुधै ' इत्युक्तत्वात् । लोके च वैणिका स्वेच्छया स्वरानवस्थापयन्तो दृश्यन्त इत्यास्ता विस्तर । मतङ्गेन तु द्वादशस्वरमूर्च्छना उक्ता —

'इदानीं सप्रवक्ष्यामि द्वादशस्वरमूर्च्छना '

इति । अत्र मूर्च्छनानिर्देश स्थानत्रितयप्राप्त्यर्थमिति वचनाद् द्वादशस्वरसपन्ना मूर्च्छना द्रष्टव्या । नन्दिकेश्वरेणाप्युक्तम्—

'द्वादशस्वरसपन्ना ज्ञातव्या मूर्च्छना बुधै ।
[1]जातिभाषाऽऽदिसिद्ध्यर्थं तारमन्द्रादिसिद्धये ॥ '

इति । ताश्चैवम्—धनिसरिगमपधनिसरिग—उत्तरमन्द्रा ॥ १ ॥ निसरिगमपधनिसरिगम—रजनी ॥ २ ॥ सरिगमपधनिसरिगमप—उत्तरायता ॥ ३ ॥ रिगमपधनिसरिगमपध—शुद्धषड्जा ॥ ४ ॥ गमपधनिसरिगमपधनि—मत्सरीकृता ॥ ५ ॥ मपधनिसरिगमपधनिस—अश्वक्रान्ता ॥ ६ ॥ पधनिसरिगमपधनिसरि—अभिरुद्गता ॥ ७ ॥ इति षड्जग्रामे ॥ मध्यमग्रामे ऽप्येवमेव । [2]सरिगमपधनिसरिगमप—सौवीरी ॥ १ ॥ रिगमपधनिसरिगमपध —हारिणाश्वा ॥ २ ॥ गमपधनिसरिगमपधनि—कलोपनता ॥ ३ ॥ मपधनिसरिगमपधनिस—शुद्धमध्या ॥ ४ ॥ पधनिसरिगमपधनिसरि—मार्गी ॥ ५ ॥ धनिसरिगमपधनिसरिग—पौरवी ॥ ६ ॥ निसरिगमपधनिसरिगम—हृष्यका ॥ ७ ॥ इति । चतुर्दशानामपि मूर्च्छनाना चातुर्विध्य प्रतिपादयति—चतुर्धेति । ताश्चतुर्दश मूर्च्छना पृथक्प्रत्येक चतुर्विधा शुद्धा काकलीसहिता सान्तरा काकल्यन्तरोपेताश्चेत्येव षट्पञ्चाशद्भवन्ति ॥ -१५, १६ ॥

[1] परिभाषाऽऽदि०
[2] निसरिगमपधनिसरिगम—सौवीरी० इत्यादि कोशान्तरपाठ

**श्रुतिद्वय चेत्षड्जस्य निषाद सश्रयेत्तदा ।**
**स काकली मध्यमस्य गाधारस्त्वन्तर स्वर ॥ १७ ॥**

(क०) मूर्च्छनाभेदकत्वेन प्रसक्तयो काकल्यन्तरयो स्वरूपमाह— **श्रुतिद्वय चेदिति । मध्यमस्येति ।** अत्रापि श्रुतिद्वय चेदित्याद्यनुषङ्गनीयम् । मूर्च्छनाभेदोपयोगिकाकल्यन्तरप्रसङ्गान्मतङ्गप्रोक्तौ स्वराणा प्रवेशनिग्रहावुच्येते । तद्यथा—द्विविधस्तानप्रयोग प्रवेशेन निग्रहेण च । प्रवेशो द्विविध पूर्वस्वरविप्रकर्षेणोत्तरस्वरमार्दवेन च । तत्रर्षभापेक्षया षड्जस्याधरीभूतस्य लोपनीयस्यापि विप्रकर्ष पीडनम्, ऋषभापादनमिति यावत् । तस्यैव षड्जस्य निषादापेक्षयोत्तरीभूतस्य मार्दव शिथिलीकरणम् , निषादापादनमिति यावत् । निग्रहस्तूत्तरस्वरस्य परित्याग , असस्पर्श इति यावत् । तथा चाह भरत —

‘ द्विधा तानक्रिया तन्त्र्या प्रवेशान्निग्रहात्तथा ।

इति । तत्र प्रवेशो नामाधरस्वरविप्रकर्षादुत्तरस्वरमार्दवाद्वा । निग्रहश्चासस्पर्श ’ इति । दत्तिलेनाप्युक्तम्—

‘ तानक्रिया द्विधा तन्त्र्या प्रवेशान्निग्रहात्तथा ।
प्रवेशो ध्वनिसादृश्यमसस्पर्शस्तु निग्रह ॥

इति ॥ १७ ॥

(सु०) काकलीसहिता सान्तरा इत्युक्तम्, तत्र को ऽय काकल्यन्तरो वेत्यपेक्षायामाह—श्रुतिद्वयमिति । निषाद षड्जस्य श्रुतिद्वय सश्रयेच्चेत, षड्जस्य द्वितीयश्रुतौ तिष्ठश्चतु श्रुतिर्भवति यदि, तदा काकलीत्युच्यते । गाधारश्च मध्यमस्य श्रुतिद्वय गृह्णश्चतु श्रुति सन्नन्तर इत्युच्यते । निषादगाधारावेव काकल्यन्तरस्वरौ, न तयो स्वरान्तरत्वमित्युक्त प्राक् ॥ १७ ॥

यस्या यावतिथौ षड्जमध्यमौ ग्रामयोः क्रमात् ।
मूर्च्छना तावतिथ्येव सा निःशङ्केन कीर्तिता ॥ १८ ॥
प्रथमादिस्वरारम्भादेकैका सप्तधा भवेत् ।
तामुच्चार्यान्त्यस्वरास्तान्पूर्वानुच्चारयेत्क्रमात् ॥ १९ ॥
ते क्रमास्तेषु संख्या स्याद् द्वानवत्या शतत्रयम् ।
यक्षरक्षोनारदाब्जभवनागाश्विपाशिन ॥ २० ॥
षड्जग्रामे मूर्च्छनानामेता स्युर्देवताः क्रमात् ।
ब्रह्मेन्द्रवायुगन्धर्वसिद्धद्रुहिणभानवः ॥ २१ ॥
स्युरिमा मध्यमग्राममूर्च्छनादेवताः क्रमात् ।
तासामन्यानि नामानि नारदो मुनिरब्रवीत् ॥ २२ ॥
मूर्च्छनोत्तरवर्णाऽऽद्या षड्जग्रामेऽभिरुद्गता ।
अश्वक्रान्ता च सौवीरी हृष्यका चोत्तरायता ॥ २३ ॥
रजनीति समाख्याता ऋषीणा सप्त मूर्च्छनाः ।
आप्यायनी विश्वकृता चन्द्रा हेमा कपर्दिनी ॥ २४ ॥
मैत्री चान्द्रमसी पित्र्या मध्यमे मूर्च्छना इमाः ।
नन्दा विशाला सुमुखी चित्रा चित्रवती सुखा ॥ २५ ॥
आलापा चेति गाधारग्रामे स्युः सप्त मूर्च्छना ।
ताश्च स्वर्गे प्रयोक्तव्या विशेषात्तेन नोदिता ॥ २६ ॥

(क०) मूर्च्छनासु प्रथमादिसख्यापरिज्ञानोपायमाह—**यस्यामिति**। **यावतिथाविति**। यावच्छब्दात्पूरणेऽर्थे डटि 'वतोरिथुक्' इति वत्वन्तस्येथुगागमे कृते यावतिथ इति रूपम्। ग्रामयोर्यस्या मूर्च्छनाया षड्जमध्यमौ यावतिथौ सा मूर्च्छना तावतिथी। अत्र 'टिड्ढाणञ् - ' इत्यादिना

डीप् ॥ अथ मूर्च्छनाप्रसङ्गेन केवलारोहवत्तया तदेकदेशरूपान्क्रमान्प्रस्तारे कूटतानोपयोगार्थं प्रतिमूर्च्छनमियत्तया ऽवधार्य लक्षयति—प्रथमादीत्यादिना। प्रथमादिस्वरारम्भात्, यस्या मूर्च्छनाया य प्रथम स्वर स आदिर्येषा त इतरे षट् स्वरा, तद्गुणसविज्ञानात्प्रथमश्चेति प्रथमादय सप्त स्वरा, तेषामारम्भ क्रमादादिमत्वेनोच्चारणम्, तस्मात्। एकैकेति। शुद्धादिभेदेनोक्तासु षट्पञ्चाशन्मूर्च्छनासु प्रत्येकमित्यर्थ। तास्वन्त्यस्वरान्क्रमादुच्चार्य पूर्वान्स्वरान्क्रमादुच्चारयेदिति क्रमादित्यस्यावृत्त्या ऽन्वय कर्तव्य। पूर्वानारब्धस्वरादधस्तनान्। इह सप्तस्वरात्मकेषु क्रमेषु पूर्वानुच्चारयेदिति लक्षणाश प्रतिमूर्च्छन प्रथमक्रमेष्वसभाव्यो ऽपि द्वितीयादिक्रमेषु सभवत्स्वरविषयो द्रष्टव्य। तद्यथा—उत्तरमन्द्राया सरिगमपधनीति प्रथम क्रम। निसरिगमपधेति द्वितीय। धनिसरिगमपेति तृतीय। पधनिसरिगमेति चतुर्थ। मपधनिसरिगेति पञ्चम। गमपधनिसरीति षष्ठ। रिगमपधनिसेति सप्तम। एव क्रमेणोच्चारितत्वादेतेषा क्रमसज्ञा॥ यक्षरक्ष इत्यादि स्पष्टार्थ॥ १८ २६॥

(सु०) मूर्च्छनासख्यापरिज्ञानार्थं सुगममुपायमाह—यस्यामिति। उभयो र्ग्रामयोर्मध्ये षड्जमध्यमौ स्वरौ यावतिथौ यावत्सख्यापूरणौ, तावतिथी तावत्सख्यापूरणी मूर्च्छना नि शङ्केन नि शङ्क इति बिरुदविराजितेन शार्ङ्गदेवेन कथिता। षड्जग्राममूर्च्छनासु यदि षड्ज प्रथमस्तर्हि प्रथमा मूर्च्छना, यदि षड्जो द्वितीयस्तर्हि द्वितीया, यदि तृतीयस्तृतीया, यदि चतुर्थश्चतुर्थी, यदि पञ्चम पञ्चमी, यदि षष्ठ षष्ठी, यदि सप्तम सप्तमीति। एव मध्यमग्राममूर्च्छनासु यदि मध्यम प्रथमस्तर्हि प्रथमा मूर्च्छना, यदि द्वितीयो द्वितीया, यदि तृतीयस्तृतीयेत्यादि॥ १८॥ षट्पञ्चाशत्सख्याना मूर्च्छनाना प्रत्येक सप्तविधत्व दर्शयति—प्रथमादीति। एकैका मूर्च्छना सप्तधा भवति, प्रथमद्वितीयतृतीय तुरीयपञ्चमषष्ठसप्तमस्वरारम्भात्। ननु द्वितीयादिस्वरारम्भे कथ सप्तस्वरत्वम्? अत आह—तास्विति। तासु मूर्च्छनास्वन्त्यस्वरपर्यन्तमुच्चार्य पूर्वान्स्वरानु-

च्चारयेत् । ननु तर्हि क्रमादारोहावरोहाभावान्मूर्च्छनात्व व्याहन्येत , अत आह— क्रमादिति । यद्यप्यारोहावरोहयो क्रमो नास्ति, तथा ऽपि स्वरक्रमस्य सद्भावान्मूर्च्छनात्वम् ॥ १९ ॥ ते मूर्च्छनाभेदा क्रमशब्देनोच्यन्ते । तेषा सख्या द्वानवत्या ऽधिक शतत्रय ज्ञातव्यम् । मतङ्गदत्तिलौ तु मूर्च्छनानामन्यथा चातुर्विध्यमवादिष्टाम् । यदाह मतङ्ग —'तत्र सप्तस्वरा मूर्च्छना चतुर्विधा पूर्णा षाडवौडुविता साधारणी चेति । तत्र सप्तभि स्वरैर्या गीयते सा पूर्णा । षड्भि स्वरैर्या गीयते सा षाडवा । पञ्चभि स्वरैर्या गीयते सौडुविता । काकल्यन्तरै स्वरैर्या गीयते सा साधारणी ।' इति । दत्तिलो ऽप्याह—

'स्वरौ यावतिथौ स्याता ग्रामयो षड्जमध्यमौ ।
मूर्च्छना तावतिथ्येव तद्ग्रामद्वितये तथा ॥
सर्वास्ता पञ्चषट्पूर्णसाधारणकृता स्मृता. ।'

इति । मूर्च्छनाना षाडवत्व वक्ष्यमाणषाडवतानप्रकारेणोक्तम् । औडुवत्व वक्ष्यमाणौडुवतानप्रकारेणोक्तम् । ताभ्या षाडवौडुवत्वम् । मूर्च्छनातानयोश्च भेद प्रतिपादितो मतङ्गेन । यदाह—'ननु मूर्च्छनातानयो को भेद ? उच्यते । मूर्च्छनातानयोर्नार्थान्तरत्वमिति विशाखिल । एतन्न सगतम्, सग्रहश्लोके मूर्च्छनातानयोर्भेदस्य प्रतिपादितत्वात् । ननु कथ मूर्च्छनातानयोर्भेद ? ब्रूम — आरोहावरोहक्रमयुक्त स्वरसमुदायो मूर्च्छनेत्युच्यते, तानस्त्वारोहणक्रमेण भवतीति भेद ' इति ॥ १९- ॥ मूर्च्छनाना देवता कथयति—यक्षेति । यक्षा , रक्षासि, नारद , अब्जभवो ब्रह्मा, नागा सर्पा , अश्विनौ दस्रौ, पाशी वरुण ॥ -२०, २०- ॥ मध्यमग्राममूर्च्छनाना देवता कथयति—ब्रह्मेति । देवताकथन तु तया तया मूर्च्छनया गीतया सा सा देवता प्रीयत इत्येतमर्थ ज्ञापयितुम् । नारदमतेन मूर्च्छनानामन्यथा नामानि कथयति—तासामिति । ऋषीणा समाख्याता इति । ऋषिभि. समाख्याता इत्यर्थ । नारदमतेन गाधार-ग्राममूर्च्छनानामानि कथयति—नन्देति । ननु गाधारग्राममूर्च्छनाना लक्षण किमिति नोक्तम् ? अत आह—ताश्चेति । विशेषयति व्यावर्तयति सजातीय-विजातीयेभ्य इति विशेषो लक्षणम् । ल्यब्लोपे पञ्चमी । लक्षण कृत्वा नोक्ता इत्यर्थ ॥ -२१—२६ ॥

तानाः स्युर्मूर्च्छना शुद्धाः षाडवौडुवितीकृताः ।
षड्जगाः सप्त हीनाश्चेत्क्रमात्सरिपसप्तमैः ॥ २७ ॥
तदा ऽष्टाविंशतिस्ताना मध्यमे सरिगोज्झिताः ।
सप्त क्रमाद्यदा तानाः स्युस्तदा त्वेकविंशतिः ॥ २८ ॥
एते चैकोनपञ्चाशदुभये षाडवा मताः ।
सपाभ्या द्विश्रुतिभ्या च रिपाभ्या सप्त वर्जिता ॥ २९ ॥
षड्जग्रामे पृथक्ताना एकविंशतिरौडुवाः ।
रिगाभ्या द्विश्रुतिभ्या च मध्यमग्रामगास्तु ते ॥ ३० ॥
हीनाश्चतुर्दशैव स्युः पञ्चत्रिंशत्तु ते युता ।
सर्वे चतुरशीतिः स्युर्मिलिताः षाडवौडुवाः ॥ ३१ ॥

(क०) प्रसङ्गात्क्रमानुक्त्वा मूर्च्छनैकदेशरूपत्वेन मूर्च्छनाऽनन्तरमुद्दिष्टाञ्शुद्धतानाँल्लक्षयति—**तानाः स्युरिति** । तन्यते विस्तार्यत इति तनोतेर्धातो 'अकर्तरि च—' इत्यादिना सूत्रेण कर्मणि घञि तान इति रूप दायो लाभ इतिवत् । शुद्धा मूर्च्छना षाडवौडुवितीकृता सत्य शुद्धास्ताना स्युरिति शुद्धपदस्योभयत्र सबन्ध । यदि तानपदेनैव संबन्धस्तदा मूर्च्छना इत्यविशेषेण प्रकृतत्वात्षट्पञ्चाशन्मूर्च्छनानामपि प्रसक्तौ तासा च प्रत्येक वक्ष्यमाणप्रकारेण षाडवौडुविततवयो कृतयोस्तदुत्थतानसख्याया षट्त्रिंशदुत्तरशतत्रयमिताया सत्याम् 'तानाश्चतुरशीति स्यु' इति भरतवचनविरोध स्यात । किं चोत्तरवाक्ययो 'षड्जगा सप्त' 'मध्यमे सप्त' इति च सख्योपादानमनुपपन्न स्यात् । अत शुद्धा मूर्च्छना इत्यन्वय कर्तव्य । अथ यदि मूर्च्छनापदेनैव सबन्ध क्रियेत तदा कूटतानानामपि लक्ष्यत्व प्रतीयेत, तानपदस्याविशेषेणोपादानात् । तन्मा भूदित्यु

भयत्रान्वय कर्तव्य । इह मूर्च्छनाना शुद्धत्व नाम काकल्यन्तररहितत्वम्, तानाना तु शुद्धत्व काकल्यन्तररहितत्व व्युत्क्रमेणोच्चारितस्वररहितत्व चाव गन्तव्यम् । षाडवौडुवितीकृता इति । सप्तसु नियतैकस्वरलोपात्षाडवा । सप्तसु नियतस्वरद्वयलोपादौडुविता । पूर्वमषाडवा षाडवा सपन्ना षाडवी कृता, पूर्वमनौडुविता औडुविता सपन्ना औडुवितीकृता । षाडवी कृताश्चौडुवितीकृताश्चेति समास । षाडवौडुवितीकृता इत्यनेनैकस्य द्वयोर्वा स्वरयोरविशेषेण लोपे प्राप्ते, भरतादिमतानुसारेण लोप निगमयति— **षड्जगा** इत्यादिना । ननु शुद्धतानेषु केषुचिद्भेदकपञ्चमलोपाद् ग्रामविवेक कथमिति चेत्, उच्यते—ग्रामविशेषमधिकृत्यैव तत्तत्स्वरविहीनतानाभिधाना त्कचिद्भेदकपञ्चमाभावे ऽपि तानविशेषस्यैव ग्रामभेदकत्वमिति ॥ २७- ३१ ॥

(सु०) तानान्निरूपयति—ताना स्युरिति । शुद्धा मूर्च्छनास्ताना स्यु । किंविधा मूर्च्छना ? विवक्षितैकस्वरापकर्षेण विवक्षितस्वरद्वयापकर्षेण च षट्स्वरा पञ्चस्वराश्चेति कृता । तमेव विवक्षित स्वरापकर्ष कथयति—षड्जगा इति । षड्जग्रामस्था मूर्च्छना यदा षड्जेन हीना क्रियन्ते तदा सप्त ताना भवन्ति । यदर्षभेण हीनास्तदा सप्त । यदा पञ्चमेन हीनास्तदा सप्त । यदा सप्तमेन निषादेन हीनास्तदा सप्त । एव षड्जग्रामे षाडवा अष्टाविंशतिस्ताना भवन्ति । मध्यमग्रामे सप्त मूर्च्छना यदा षड्जोज्झिता भवन्ति तदा सप्त ताना । यदर्षभोज्झितास्तदा सप्त । यदा गाधारोज्झितास्तदा सप्त । एव मध्यमग्राम एकविंशति षाडवास्ताना भवन्ति । ग्रामद्वये मिलिता षाडवास्ताना एकोनपञ्चाशत् ॥ २७—२८- ॥ औडुवास्तानान्निरूपयति—सपाभ्यामिति । षड्जग्राममूर्च्छना सपाभ्या षड्जपञ्चमाभ्या वर्जिता यदा भवन्ति तदा सप्तौडुवास्ताना । यदा द्विश्रुतिभ्या गाधारनिषादाभ्यां वर्जितास्तदा सप्त । यदा रिपाभ्यामृषभपञ्चमाभ्या हीनास्तदा सप्त । एव षड्जग्राम एकविंशतिस्ताना औडुवा । मध्यमग्रामे यदा सप्त मूर्च्छना रिधाभ्यामृषभधैवताभ्या हीना भवन्ति तदा सप्त ताना औडुवा । यदा द्विश्रुतिभ्या गाधारनिषादाभ्या हीनास्तदा सप्त । एव मध्यमग्राम

**असंपूर्णाश्च संपूर्णा व्युत्क्रमोच्चारितस्वराः ।**
**मूर्च्छनाः कूटतानाः स्युस्तत्संख्यामभिदध्महे ॥ ३२ ॥**
**पूर्णाः पञ्च सहस्राणि चत्वारिंशद्युतानि तु ।**
**एकैकस्यां मूर्च्छनायां कूटतानाः सह क्रमैः ॥ ३३ ॥**

औडुवास्तानाश्चतुर्दश । ग्रामद्वये मिलिता औडुवाः पञ्चत्रिंशत् । सर्वे ऽपि षाडवौडुवाश्चतुरशीतिः । तानानां प्रयोगस्तु द्विधा कथितो मतङ्गेन । यदाह—कथमेषां तानानां प्रयोगः कार्य इति चेत्, उच्यते । द्विविधस्तानप्रयोगः प्रवेशेन निग्रहेण च । प्रवेशो ह्यृषभापेक्षया षड्जस्याधरीभूतस्य लोपनीयस्य विप्रकर्षः पीडनम्, ऋषभापादनमिति यावत् । इति विप्रकर्षेण प्रवेशः । मार्दवेनायं यथा—तस्यैव षड्जस्य निषादापेक्षयोत्तरीभूतस्य मार्दवं शिथिलीकरणम्, निषादापादनमिति यावत् । इति द्विविधः प्रवेशः । निग्रहस्तूत्तरस्वरपरित्यागो ऽसंस्पर्शः । प्रयोगस्तु यथा—सासागरिपापामारी । तथा चाह भरतः—'द्विधा तानक्रिया तन्त्र्यां प्रवेशो निग्रहश्च । अत्र प्रवेशो नामाधरस्वरप्रकर्षणादुत्तरस्वरमार्दवाच्च । निग्रहश्चासंस्पर्शः' इति । दत्तिलो ऽप्याह—

'द्विधा तानक्रिया तन्त्र्यां प्रवेशान्निग्रहात्तथा ।
प्रवेशो ध्वनिसादृश्यमसंस्पर्शस्तु निग्रहः ॥'

इति । ननु प्रथमायां सप्तम्यां च मूर्च्छनायां षड्जे लुप्ते रिगमपधनीत्येकमेव रूपं भवतीति तत्र को विशेषः ? सत्यं भेदो नास्ति, परं तु मन्द्रतारकृतो भेदो विद्यत एव । ननु मूर्च्छनास्तावज्जातिरागभाषाऽऽदिषूपयोगिन्य इति युक्तं तासां कथनम्; तानास्तु कुत्रोपयुज्यन्ते ? उच्यते । द्वयोर्ग्रामयोर्जातिरागान्यत्वप्रतिपादनार्थं प्रयोगस्तानानामित्युक्तं मतङ्गेन ॥ -२९—३१ ॥

(क०) क्रमप्राप्तान्कूटतानाँल्लक्षयति—**असंपूर्णाश्चे**ति । मूर्च्छनाश्चतुर्विधा अपि मूर्च्छनाः संपूर्णा असंपूर्णाश्च व्युत्क्रमेणोच्चारितस्वराश्चेत्कूटतानाः स्युरित्यन्वयः । संपूर्णाः सप्तस्वरयुक्ताः, असंपूर्णा एकैकान्त्यान्त्यस्वरत्यागे सति षटस्वराद्येकस्वरान्ताः, चकारो विकल्पार्थः । व्युत्क्रमोच्चा-

षट्पञ्चाशन्मूर्च्छनास्थाः पूर्णाः कूटास्तु योजिताः ।
लक्षद्वय सहस्राणि द्व्यशीतिर्द्वे शते तथा ॥ ३४ ॥
चत्वारिंशच्च सख्याता अथापूर्णान्प्रचक्ष्महे ।
एकैकान्त्यान्त्यविरहाद्भेदाः षट् षट्स्वरादयः ॥ ३५ ॥
एकस्वरो ऽत्र निर्भेदो ऽप्युक्तो नष्टादिसिद्धये ।
क्रमा अकूटतानत्वे ऽप्युक्तास्तेषूपयोगिनः ॥ ३६ ॥

रितस्वरा इत्यत्र स्वराणामानुपूर्व्या ऽऽरोह एव क्रम । तेष्वेकादिस्वरव्यत्यासो व्युत्क्रम । अवरोहे सत्यामपि विपरीतानुपूर्व्या क्रमत्वाभावेन कूटतानत्वमेव । कूटत्व नाम व्युत्क्रमोच्चारितस्वरत्वम् ॥ अथ षटपञ्चाशति मूर्च्छनास्वेकैकस्या सपूर्णादिसप्तभेदेषु प्रतिभेद वक्ष्यमाणप्रस्तारवशादियत्तया कूटतानसख्या दर्शयितु प्रतिज्ञापूर्वकमाह— **पूर्णा पञ्च सहस्राणी**त्यादिना ॥ **एकैकान्त्यान्त्यविरहा**दिति । एकैकस्या मूर्च्छनायामन्त्यान्त्यविरहादन्त्यान्त्यस्वरपरित्यागात् । अन्त्यान्त्येति वीप्सयोत्तरमन्द्राया सपूर्णक्रमे ऽन्त्यो निषाद , तस्य परित्यागात्षट्स्वर क्रमो भवति । तस्मिन्क्रमे ऽन्त्यो धैवत , तत्परित्यागात्पञ्चस्वर क्रमो भवति । एवमसपूर्णा षड् भेदा द्रष्टव्या । तद्यथा सरिगमपधेति षट्स्वरो भेद , सरिगमपेति पञ्चस्वर , सरिगमेति चतु स्वर , सरिगेति त्रिस्वर , सरीति द्विस्वर , सेत्येकस्वर । एवमन्यास्वपि मूर्च्छनासु प्रत्येक षड् भेदा द्रष्टव्या । निर्भेद प्रस्ताराभावादवान्तरभेदरहित । **नष्टादिसिद्धय** इति । आदिशब्देनोद्दिष्टस्य सख्यायाश्च ग्रहणम् , तेषु 'मौलैकाङ्कसमन्विते ' इत्येकस्वरतानस्योपयोगात्तत्सिद्धिरिति, तस्यै । **तेषूपयोगिन** इति । तेषु कूटतानेषु मूलकारणत्वेनोपयोगिनो यतो ऽत उक्ता । व्युत्क्रमस्य क्रमापेक्षित्वादिति भाव ॥ ३२–३६ ॥

(सु०) कूटतानान्कथयति—असपूर्णा इति । या मूर्च्छना असपूर्णा याश्च सपूर्णास्तास्ता एव व्युत्क्रमेणोच्चारितस्वरा सत्य कूटताना भवन्ति । प्रतिमूर्च्छन पूर्णकूटतानसख्या प्रतिज्ञाय कथयति—तत्सख्यामिति ॥ ३२ ॥ एकैकस्या मूर्च्छनाया पूर्णा कूटतानाश्चत्वारिंशदुत्तराणि पञ्च सहस्राणि (५०४०) भवन्ति । ननु मतङ्गेन त्रयस्त्रिंशदधिकानि पञ्च सहस्राणि (५०३३) प्रतिमूर्च्छन कूटतानसख्योक्ता, यदाह—"कूटतानाना सहस्राणि पञ्च त्रयस्त्रिंशदधिकानि निष्पद्यन्ते, दत्तिलेनाप्युक्तम्—

'पूर्णा पञ्च सहस्राणि त्रयस्त्रिंशच्च सख्यया ।
कथयन्ति प्रतिग्राममुपायो गणने ऽधुना ॥'

इति" इति । तन्निरासार्थमाह—सह क्रमैरिति । प्रतिमूर्च्छन प्रस्तारे क्रियमाणे सप्त क्रमा सजायन्ते, तै सह चत्वारिंशदुत्तराणि पञ्च सहस्राणि भवन्तीति तात्पर्यम् । दत्तिलादिभिस्तु क्रमान्विहाय कूटतानसख्यैव निर्दिष्टेत्यविरोध ॥३३॥ प्रतिमूर्च्छन कूटतानसख्यामुक्त्वा सर्वासा मूर्च्छनाना कूटतानसख्या कथयति—षट्पञ्चाशदिति । चत्वारिंशदधिकानि पञ्च सहस्राणि षट्पञ्चाशता गुणनीयानि । एतावता लक्षद्वय द्व्यशीति सहस्राणि शतद्वय चत्वारिंशदधिकमितीय सख्या (२८२२४०) निष्पद्यते । अपूर्णान्कूटतानान्प्रतिज्ञाय कथयति—अथापूर्णानिति । क्रमाणा कूटतानाना च षट्स्वरादय षड् भेदा भवन्ति । कथ भवन्तीत्यपेक्षायामाह—एकैकान्त्यान्त्यविरहादिति । पूर्णा या मूर्च्छना ग्रामद्वये तासामेकैकान्त्य स्वरापकर्षेण, अन्त्यैकस्वरापकर्षेण षट्स्वरा भेदा भवन्ति, अन्त्यस्वरद्वयापकर्षेण पञ्चस्वरा, अन्त्यस्वरत्रयविरहेण चतु स्वरा, अन्त्यस्वरचतुष्टयहान्या त्रिस्वरा, अन्त्यस्वरपञ्चकहान्या द्विस्वरा, अन्त्यस्वरषट्कहानेनैकस्वरा इति ॥३४, ३५॥ नन्वेकस्वराणा प्रस्ताराभावाद्भेदा न सन्ति, ते किमर्थमत्रोच्यन्ते? अत आह—एकस्वर इति । एकस्वरभेदा नष्टोद्दिष्टसिद्धय उक्ता । एकस्वरपरित्यागेन द्विस्वरादीनामपि निवेशने खण्डमेरौ नष्टोद्दिष्टपरिज्ञानस्याशक्यत्वादेकस्वरा अप्युक्ता इत्यर्थ । ननु तर्हि क्रमा कूटतानत्वाभावात्किमर्थमत्रोच्यन्ते? अत आह—क्रमा इति । क्रमा यद्यपि कूटताना न भवन्ति, तथा ऽपि 'क्रम न्यस्य स्वर स्थाप्य' इति वक्ष्यमाणे प्रस्तारे ते कूटतानेषूपयोगिनो भवन्ति, क्रमैर्विना कूटतानानामशक्यज्ञानत्वात् ॥ ३२–३६ ॥

तस्य भेदास्तु बहवस्तत्र स्थायिगतान्ब्रुवे ।
येषामाद्यन्तयोरेक स्वरस्ते स्थायिवर्णगाः ॥ ४ ॥
प्रसन्नादिः प्रसन्नान्त प्रसन्नाद्यन्तसञ्ज्ञक' ।
ततः प्रसन्नमध्य स्यात्पञ्चम' क्रमरेचित ॥ ५ ॥
प्रस्तारो ऽथ प्रसाद स्यात्सप्तैते स्थायिनि स्थिताः ।
मन्द्र' प्रकरणे ऽत्र स्यान्मूर्च्छनाप्रथमः स्वरः ॥ ६ ॥
स एव द्विगुणस्तारः पूर्व पूर्वो ऽथ वा भवेत् ।
मन्द्रः परस्ततस्तार प्रसन्नो मृदुरित्यपि ॥ ७ ॥
मन्द्रस्तारस्तु दीप्तः स्यान्मन्द्रो बिन्दुशिरा भवेत् ।
ऊर्ध्वरेखाशिरास्तारो लिपौ त्रिर्वचनात्प्लुतः ॥ ८ ॥
मन्द्रद्वयात्परे तारे प्रसन्नादिरुदीरितः ।
स स सं । (१)

भिर्नारी काव्ये वा ऽनुप्रासादिभी रसादिस्तद्वत् । तथा चाह भरत प्रकारान्तरेण—

'शशिना रहितेव निशा विजलेव नदी लता विपुष्पेव ।
अविभूषितेव कान्ता गीतिरलकारहीना स्यात् ॥' इति ।

**येषामाद्यन्तयोरिति** । येषामलकाराणामाद्यन्तयो कलानामुपक्रमोपसहारयोरेक स्वरो मूर्च्छनावशेन षड्जादीना मध्ये यस्तूपक्रान्त उपसहारे स्थानान्तरगतो ऽपि स एवेत्यर्थ । एतेन स्थायिवर्णादिवृत्तिरेतेषु दर्शिता । अतस्ते स्थायिवर्णगा स्थाय्यलकारा ॥ उक्तेष्वेव मन्द्रादिस्थानेष्वलकार-

20

लक्षणार्थं प्रतिमूर्च्छनं तारमन्द्रव्यवहारमन्यथा ऽनेकधा करोति—मन्द्र प्रकरण इति । द्विगुणो ऽष्टम ॥ ३—८ ॥

(सु०) वर्णमुक्त्वा तदनुगतालकारलक्षणमाह— विशिष्टमिति । केनचिल्लक्षणविशेषेण विशिष्ट वर्णसदर्भ वर्णसमुदायमलकार प्रचक्षते भरतादय । मतङ्गेनाप्यलकारस्य लक्षणव्युत्पत्ती कथिते । यथा—"नन्वलकारशब्देन किमुच्यते, व्युत्पत्तिर्वा तस्य कीदृशी ? उच्यते—अलकारशब्देन मण्डनमुच्यते । यथा कटककेयूरादिना ऽलकारेण नारी पुरुषो वा मण्डित शोभामावहेत्तथैतैरलकारै प्रसन्नादिभिरलकृता वर्णाश्रया गीतिर्गातृश्रातृणा सुखावहा भवतीति । व्युत्पत्तिश्च यथा—'डुकृञ् करणे' इत्यस्माद्धातोरलशब्दपूर्वाद् घञ्प्रत्यये ऽलकारशब्द " इति ॥ तस्य बहुभेदत्वे ऽपि कियताचित्कथनार्थं प्रतिजानीते - तस्येति ॥ स्थायिवर्णालकाराँल्लक्षयति—येषामिति । आदावन्ते च येषामेक एव स्वरस्ते स्थायिवर्णालकारा । तान्परिगणयति—प्रसन्नादिरिति । एते सप्त स्थायिनि वर्णे स्थिता, स्थाय्यलकारा इत्यर्थ ॥ अलकारप्रकरणोपयोगिनीं परिभाषामाह—मन्द्र इति । अत्रास्मिन्नलकारप्रकरणे मूर्च्छनाया प्रथम स्वरो मन्द्रशब्देनोच्यते । स एव मूर्च्छनाप्रथमस्वरो द्विगुणस्तारशब्देनोच्यते । यदा मूर्च्छनाप्रथमस्वरो मन्द्रो भवति तदा स एव मध्यस्तारशब्देनोच्यते । यदा तु मूर्च्छनाप्रथमस्वरो मध्यस्तदा स एव तारस्तारशब्देनोच्यते । विकल्पेनान्यथा मन्द्रतारादिशब्दवाच्यत्वमाह—पूर्वं पूर्वं इति । पूर्वस्थानस्थ स्वरो मन्द्र परस्थानस्थस्तार इति । यदा मन्द्रस्थानस्थ पूर्वस्तदा मध्यस्थानस्थस्तार । यदा मध्यस्थानस्थ पूर्वस्तदा तारस्थानस्थस्तार । अत्र मूर्च्छनाऽऽदिस्वरेणैव पूर्वेण भवितव्यमिति नियमो नास्तीति पूर्वमुक्तात्पक्षाद्भेद । मन्द्रतारपर्यायानाह—प्रसन्न इति । प्रसन्नमृदुमन्द्रशब्दैर्मन्द्रो ऽभिधीयते । दीप्ततारशब्दाभ्या तार । मन्द्रतारयोर्लिपिविशेष कथयति—मन्द्र इति । लिपौ मन्द्र स्वरो बिन्दुशिरा शिरसि बिन्दुसहितो लेखनीय, तारस्तु शिरस्यूर्ध्वरेखया सहित । त्रिर्वचनात्स्वर प्लुत इत्युच्यते । स त्रिरुच्चारणीय इत्यर्थ ॥ ३—८ ॥

**तद्वैलोम्ये प्रसन्नान्तः**

**सं सं सं । (२)**

**प्रसन्नद्वयमध्यगे ॥ ९ ॥**

**दीप्ते प्रसन्नाद्यन्तः स्यात्**

**सं सं सं । (३)**

**तारयोर्मध्यगे पुनः ।**

**मन्द्रे प्रसन्नमध्याख्यमलंकारं विदो विदुः ॥ १० ॥**

**सं सं सं । (४)**

**आद्यन्तयोर्मूर्च्छनाऽऽदिश्चेत्स्वरो ऽन्तर्द्वितीयकः ।**
**सैका कला ऽथ चेन्मध्ये स्तस्तृतीयचतुर्थकौ ॥ ११ ॥**
**सा द्वितीया पञ्चमाद्यास्त्रयो ऽन्तश्चेत्कला परा ।**
**एवं कलात्रयेणोक्तो ऽलंकारः क्रमरेचितः ॥ १२ ॥**

(क०) उद्देशक्रमेण त्रिषष्टिमलंकारान्दर्शयति—**मन्द्रद्वयात्पर** इत्यादिना **त्रिषष्टिरुदिता मयेत्यन्तेन** । इह ग्रन्थकारेण दिङ्मात्रप्रदर्शनार्थमुत्तरमन्द्रामधिकृत्य प्रसिद्धालंकाराणां प्रस्तारो लिखितः । तद्वन्मूर्च्छनाऽऽन्तरेष्वप्यलंकारप्रस्तारा द्रष्टव्याः ॥ ९—६३ ॥

(सु०) प्रसन्नादिं लक्षयति—मन्द्रद्वयादिति । मन्द्रस्वरद्वयमुच्चार्य यदि सकृत्तारस्वर उच्चार्यते तदा प्रसन्नादिरलंकारः । **तद्वैलोम्य** इति । तस्य प्रसन्नादेर्विपरीतत्वे पूर्वं सकृत्तारः पश्चाद् द्विर्मन्द्रश्चेत्, तदा प्रसन्नान्तः । **प्रसन्नद्वयेति** । यदि पूर्वं मन्द्रः पश्चाद्दीप्तः पुनरपि मन्द्रस्तदा प्रसन्नाद्यन्तः । **तारयोरिति** । यदि पूर्वं तारः पश्चान्मद्रः पुनरपि तारस्तदा प्रसन्नमध्यः ॥ ९, १० ॥ क्रमरेचितं लक्षयति—**आद्यन्तयोरिति** । मूर्च्छनायाः प्रथमः स्वरो यद्यादावन्ते च तिष्ठति, द्वितीयः स्वरो मध्ये, एवमेका कला; द्वितीयकलायां तु मूर्च्छनाप्रथमस्वर एवा-

सरिस सगमस सपधनिस । (५)
दीप्तान्तश्चेत्प्रतिकल प्रस्तारः सो ऽभिधीयते ।
सरिसं सगमसं सपधनिसं । (६)
तारमन्द्रविपर्यासात्त प्रसाद प्रचक्षते ॥ १३ ॥
संरिस संगमस संपधनिस । (७)

इति स्थायिगतालकारा ।

स्याता विस्तीर्णनिष्कर्षौ बिन्दुरभ्युच्चय·[1] परः ।
हसितप्रेङ्खिताक्षिप्तसधिप्रच्छादनास्तथा ॥ १४ ॥
उद्गीतोद्वाहितौ तद्वत्त्रिवर्णौ वेणिरित्यमी ।
द्वादशारोहिवर्णस्थालकाराः परिकीर्तिताः ॥ १५ ॥
मूर्च्छनाऽऽदेः स्वराद्यत्र क्रमेणारोहण भवेत् ।
स्थित्वा स्थित्वा स्वरैर्दीर्घैः स विस्तीर्णो ऽभिधीयते ॥ १६ ॥
सा री गा मा पा धा नी । (१)

द्यन्तयो , मध्ये तृतीयचतुर्थौ , तृतीयस्या तु कलाया प्रथम स्वर एवाद्यन्तयो , मध्ये पञ्चमषष्ठसप्तमस्वरा , एव कलात्रयेण क्रमरेचितो ऽलकारो भवति ॥ ११, १२॥ दीप्तान्त इति । क्रमरेचितस्य तिसृष्वपि कलासु यद्यन्तिमो दीप्तो भवति तदा प्रस्ताराख्यो ऽलकार ॥ १२ ॥ तारेति । प्रस्तारस्य तारमन्द्रविपर्यासात्प्रसादालकार । क्रमरेचितस्य कलात्रये पूर्वस्तारो ऽन्तिमस्तु मन्द्र एवेति ॥-१३॥ इति स्थायिगतालकारा ॥ आरोह्यलकारान्परिगणयति—स्यातामिति ॥ १४, १५ ॥ विस्तीर्णालकार लक्षयति—मूर्च्छनाऽऽदेरिति । मूर्च्छनाया प्रथमस्वराद्दीर्घैं स्वरै स्थित्वा स्थित्वा विलम्ब्य विलम्ब्य क्रमेण यत्रारोहण भवेत्स विस्तीर्णालकार ।

[1] ०रभ्युच्छ्रय

ह्रस्वैः स्वरैः स निष्कर्षो द्विर्द्विरुक्तैर्निरन्तरैः ।

सस रिरि गग मम पप धध निनि । (२)

त्रिश्चतुर्वा स्वरोच्चारे गात्रवर्णमिम विदुः ॥ १७ ॥

ससस रिरिरि गगग ममम पपप धधध निनिनि ॥

ससससस रिरिरिरि गगगग मममम पपपप धधधध निनिनिनि । (२)

निष्कर्षस्यैव भेदौ द्वौ केचिदेतौ बभाषिरे ।

प्लुत ह्रस्व प्लुत ह्रस्त प्लुत ह्रस्व प्लुत स्वरम् ॥ १८ ॥

कुर्वन्क्रमाद्यदा ऽऽरोहेत्तदा बिन्दुरय मतः ।

स३रि ग३म प३ध नि३ । (३)

एकान्तरस्वरारोहमाहुरभ्युच्चय[1] बुधा ॥ १९ ॥

सगपनि । (४)

यत्रैकोत्तरवृद्धाभिरावृत्तिभिरुदीरिताः ।

आरुह्यन्ते स्वराः प्राह हसित त शिवप्रिय ॥ २० ॥

स्वराणा दीर्घत्वाद्विलम्बितत्वाच्च क्रमाद्भेद ॥ १६ ॥ ह्रस्वैरिति । ह्रस्वै स्वरैर्द्विर्द्विरुक्तै क्रमेणोच्चारितैर्निष्कर्षालकार ॥ १६ ॥ त्रिरिति । स्वराणा त्रिश्चतुर्वोच्चारणे गात्रवर्णालकार ॥ -१७ ॥ मतान्तरेण गात्रवर्णस्य निष्कर्षान्तर्भावमाह— निष्कर्षस्यैवेति । एतौ द्वौ भेदौ त्रिश्चतु स्वरोच्चारणरूपौ ॥ १७ ॥ प्लुतमिति । प्रथमस्वर त्रिरुच्चार्य द्वितीयस्वर सकृत्, तृतीयस्वर त्रि , चतुर्थस्वर सकृत्, पञ्चमस्वर त्रि , षष्ठस्वर सकृत्, सप्तमस्वर त्रिरुच्चारयेत्, तदा बिन्द्वाख्यो ऽलकार ॥ -१८, १८- ॥ एकान्तरेति । एकान्तरस्वरारोहणेनाभ्युच्चयाख्यो ऽलकार ॥ -१९ ॥ यत्रेति । यत्र स्वराणामेकोत्तरवृद्ध्या ऽऽवृत्ति, प्रथम स्वर सकृत, द्वितीयो द्वि , तृतीयस्त्रि , चतुर्थश्चतु , पञ्चम पञ्चकृत्व , षष्ठ षट्कृत्व , सप्तम सप्तकृत्व उच्चार्यते तमलकार शिवप्रिय शाङ्गदेवो हसितमिति

[1] ०रभ्युच्छ्रयम्

स रिरि गगग मममम पपपपप धधधधधध निनिनिनि-
निनिनि । (५)

स्वरद्वय समुच्चार्य पूर्व पूर्वयुत परम् ।
यदान्दोलितमारोहेत्प्रेङ्खितो ऽसौ क्रमो ऽथ वा ॥ २१ ॥

सरि रिग गम मप पध धनि । (६)

एकान्तर स्वरयुग तादृक्पूर्वयुत परम् ।
क्रमादारोहति यदा तदा ऽऽक्षिप्त प्रचक्षते ॥ २२ ॥

सग गप पनि । (७)

त्रिस्वरा ऽऽद्या कला ऽन्ये च पूर्वपूर्वान्तिमादिमे ।
कले स्तस्त्रिस्वरे यत्र सधिप्रच्छादनस्तु स ॥ २३ ॥

सरिग गमप पधनि । (८)

यदा ऽऽद्याद्यस्त्रिरावृत्त कलयोस्त्रिस्वरात्मनो' ।
तदोद्गीत

सससरिग मममपध । (९)

ब्रूते ॥ २० ॥ स्वरद्वयमिति । पूर्व स्वरद्वयमुच्चार्य पर पूवयुतम्, पूर्वापेक्षया परो द्वितीय स्वरस्तद्युत पर तृतीयमारोहेत् । पुनरपि तृतीययुत चतुर्थ चतुर्थयुत पञ्चम पञ्चमयुत षष्ठ षष्ठयुत सप्तममान्दोलयन्यदा ऽऽरोहति तदा ऽसावलकार प्रेङ्खितनामा ऽथ वा क्रमनामा भवति ॥ २१ ॥ आक्षिप्त लक्षयति—एकान्तरमिति । पूर्वोक्तरीत्या यदैकान्तर स्वरयुगमारोहति, प्रथमसहित तृतीय तृतीयसहित पञ्चम पञ्चमसहित सप्तम यदा ऽऽरोहति तदा ऽऽक्षिप्तालकार ॥२२॥ सधिप्रच्छादन लक्षयति—त्रिस्वरेति । आद्या कला त्रिस्वरा, अन्ये द्वे कले पूर्वपूर्वान्तिमादिमे पूर्वस्या पूवस्या कलाया यो ऽन्तिम स्वर स आदिमो ययोस्ते तथाविधे त्रिस्वरे यस्मिन्स त्रिकल सधिप्रच्छादन ॥ २३ ॥ उद्गीत लक्षयति—यदेति । त्रिस्वरयो कलयोर्यदा ऽऽद्याद्य स्वरस्त्रिरावर्तते तदोद्गीता-

मध्यमेन तादृशोद्वाहितो मतः ॥ २४ ॥

सरिरिरिग मपपपध । (१०)

अन्त्यस्य तु त्रिरावृत्तौ त्रिवर्ण वर्णयन्त्यमुम् ।

सरिगगग मपधधध । (११)

त्रयाणा तु त्रिरावृत्तौ पृथग्वेणिरुदीरित ॥ २५ ॥

ससस रिरिरि गगग, ममम पपप धधध । (१२)

इत्यारोह्यलकारा ।

अवरोहक्रमादेते द्वादशाप्यवरोहिणि ।

इत्यवरोह्यलकारा ।

मन्द्रादिर्मन्द्रमध्यश्च मन्द्रान्तः स्यादतः परम् ॥ २६ ॥
प्रस्तारश्च प्रसादो ऽथ व्यावृत्तस्खलितावपि ।
परिवर्ताक्षेपबिन्दूद्वाहितोर्मिसमास्तथा ॥ २७ ॥
प्रेङ्खनिष्कूजितश्येनक्रमोद्धट्टितरञ्जिता ।
सनिवृत्तप्रवृत्तो ऽथ वेणुश्च ललितस्वरः ॥ २८ ॥

ख्यो ऽलकार । एतस्मिन्नलकारे मूर्च्छनाया षडेव स्वरा व्याप्यन्ते । सप्तमस्य समाप्तिर्नास्ति ॥ २३- ॥ अधुनोद्वाहित वर्णयति—मध्यमेनेति । त्रिस्वरयो कलयोर्मध्यमेन स्वरेण तादृशा त्रिरावृत्तेन तूद्वाहिताख्यो ऽल्कार ॥ -२४ ॥ त्रिवर्ण लक्षयति—अन्त्यस्येति । त्रिस्वरयो कलयोरन्त्यस्य त्रिरावृत्तौ त्रिवर्णाख्यो ऽलकार ॥ २४- ॥ पृथग्वेणिमाचष्टे—त्रयाणामिति । त्रिस्वरयो कलयोस्त्रयाणामपि स्वराणा त्रिरावृत्तौ पृथग्वेणिरलकार । एतेषु त्रिष्वप्यलकारेषु सप्तस्वरावृत्तिर्नास्ति ॥ -२५ ॥ इत्यारोह्यलकारा ॥ अवरोह्यलकाराँल्लक्षयति—अवरोहेति । एत एवावरोहक्रमेणोच्चारिता अवरोह्यलकारा भवन्ति ॥ २५- ॥ इत्यवरोह्यलकारा ॥ सचार्यलकारान्परिगणयति—मन्द्रादिरिति । मन्द्राद्यादय

हुकारो ह्रादमानश्च ततः स्यादवलोकित ।
स्युः सचारिण्यलकाराः पञ्चविशतिरित्यमी ॥ २९ ॥
त्रिस्वरा ऽद्या कलैकैकमन्द्रत्यागेन चापरा ।
त्रिस्वराश्चेत्कला मन्द्राद्या मन्द्रादिस्तदा भवेत् ॥ ३० ॥

सगरि रिमग गपम मधप पनिध । (१)

ताः कला मन्द्रमध्यान्ताः क्रमाच्चेदपरौ तदा ।

मन्द्रमध्यो यथा—

गसरि मरिग पगम धमप निपध । (२)

मन्द्रान्तो यथा—

रिगस गमरि मपग पधम धनिप । (३)

त्यक्तान्तर स्वरयुग त्यक्तादारभ्यते पुनः ॥ ३१ ॥
युग तादृक्समारोहेत्तदा प्रस्तार उच्यते ।

सग रिम गप मध पनि । (४)

पूर्वः पूर्व परस्योर्ध्वाधोवर्ती क्रियते स्वरः ॥ ३२ ॥

पञ्चविशतिरलकारा सचारिण ॥ २६–२९ ॥ तत्र मन्द्रादि लक्षयति—त्रिस्वरेति । आद्या कला त्रिस्वरा प्रथमतृतीयद्वितीयस्वरयुक्ता, अन्या अपि मन्द्राद्या कला एकैकमन्द्रत्यागेन यदि भवन्ति तदा मन्द्रादिरलकार ॥ ३० ॥ मन्द्रमध्यमन्द्रान्तौ लक्षयति—ता इति । तास्वेव पञ्चसु कलासु मन्द्रो मध्ये भवति चेन्मध्यश्चादौ तदा मन्द्रमध्यो ऽलकार । तास्वेव मन्द्रो ऽन्ते भवति चेदन्तिमश्चादौ तदा मन्द्रान्तो ऽलकार ॥ ३०- ॥ प्रस्तार लक्षयति—त्यक्तान्तरमिति । त्यक्तान्तर स्वरयुग प्रथमतृतीयस्वरयुगमारुह्य त्यक्ताद् द्वितीयस्वरादारभ्य तादृक्त्यक्तान्तर स्वरयुग द्वितीयचतुर्थस्वरयुगम्, एव तृतीयपञ्चमस्वरयुग चतुर्थषष्ठस्वरयुग पञ्चमसप्तमस्वरयुग च यद्यारोहति तदा प्रस्ताराख्यो ऽलकार ॥ -३१, ३१- ॥ प्रसाद लक्षयति । पूर्व इति । पूर्व पूर्व स्वर.

यदा तदा प्रसाद तमाह श्रीकरणेश्वरः ।

सरिस रिगरि गमग मपम पधप धनिध । (५)

चतुःस्वरा कला तत्राद्यात्तृतीय द्वितीयकात् ॥ ३३ ॥

तुर्यं गत्वा ऽऽदिम गच्छेदेवमेकैकहानतः ।

चतु स्वराः परा यत्र स व्यावृत्त स्मृतो बुधैः ॥ ३४ ॥

सगरिमस रिमगपरि गपमधग मधपनिम । (६)

कला प्रयुज्य मन्द्रादेर्द्विरुक्तोर्ध्वस्वरान्विताम् ।

अवरुह्येत चेदेष स्खलिताख्यस्तदा भवेत् ॥ ३५ ॥

सगरिममरिगस रिमगपपगमरि गपमधधमपग मधपनिनिपधम । (७)

स्वर द्वितीयमुज्झित्वा त्रिस्वरा ऽऽद्या कला यदि ।

त्यक्तादारभ्य तादृश्यो ऽन्यास्तदा परिवर्तकः ॥ ३६ ॥

सगम रिमप गपध मधनि । (८)

त्रिस्वराश्चेत्कला पूर्वपूर्वत्यागोर्ध्वसक्रमैः ।

परस्य द्वितीयस्वरस्योर्ध्वाधोवर्त्याद्यन्तवर्ती यदि क्रियते तदा प्रसादाख्यो ऽलकार ॥ -३२, ३२ ॥ व्यावृत्त लक्षयति—चतु स्वरेति । एतस्मिन्कला चतु स्वरा । तस्या प्रथमतृतीयद्वितीयचतुर्थाद्या स्वरा उच्चार्या , प्रथमस्वरपरित्यागेनान्यदेवमेव कलात्रय यत्र स व्यावृत्ताख्यो ऽलकार ॥ -३३, ३४ ॥ स्खलित लक्षयति—कलामिति । मन्द्रादेरलकारस्य प्रथमतृतीयद्वितीयस्वरयुक्ता त्रिस्वरा कला प्रयुज्योर्ध्व स्वर चतुर्थ स्वर द्विरुच्चाय सकलावरोहेण चेदुच्चार्येत तदा ऽष्टस्वरकल स्खलिताख्यो ऽलकार ॥ ३५ ॥ परिवर्तक लक्षयति—स्वरमिति । द्वितीयस्वरमुज्झित्वा प्रथमतृतीयचतुर्थस्वरैस्त्रिस्वरा प्रथमा कला, त्यक्ताद् द्वितीयस्वरादारभ्यैवमेवान्या कला यत्र स परिवर्तकाख्यो ऽलकार ॥३६॥ आक्षेप लक्षयति—त्रिस्वरा इति । त्रिस्वरा कला पूर्वपूर्वपरित्यागेनोर्ध्वस्वर-

तदा ऽऽक्षेप

सरिग रिगम गमप मपध पधनि। (९)

अथ बिन्दुः स यत्र प्लुतमधःस्वरम् ॥ ३७ ॥

कृत्वा ऽग्निवत्पर स्पृष्ट्वा ऽधः स्पर्शेनाखिलाः कलाः।

स३रिस रि३गरि ग३मग म३पम प३धप ध३निध। (१०)

कलाया त्रीन्स्वरान्गीत्वा ऽवरुह्यैक पराः कलाः ॥ ३८ ॥

यत्रैकैकोज्झिता गीतास्तद्वदुद्वाहितस्तु सः।

सरिगरि रिगमग गमपम मपधप पधनिध। (११)

मूर्च्छनाऽऽदेः स्वरात्तुर्य प्लुतीकृत्याद्यमेत्य च ॥ ३९ ॥

तुर्यगाने कलैकैकहानाद्यत्रापरास्तथा।

स ऊर्मिः स्यात्

समृ३सम रिप३रिप गध३गध मनि३मनि। (१२)

स तु समः कला यत्र चतु स्वराः ॥ ४० ॥

व्याप्त्या च यदि क्रियन्ते तदा ऽऽक्षेपालकार ॥ ३६- ॥ बिन्दु लक्षयति—**अथ बिन्दुरिति**। अध स्वर पूर्वस्वर प्लुत कृत्वा त्रिरुच्चार्य पर द्वितीयमग्निवत्सकृत्स्पृष्ट्वा ऽऽद्य सकृदुच्चारणीय। एव द्वितीयस्वराद्या पञ्चस्वरा कला यत्र स बिन्द्वाख्यो ऽलकार ॥ -३७, ३७ ॥ उद्वाहित लक्षयति—**कलाया-मिति**। त्रीन्स्वरान्गीत्वैक स्वरमवरोहेत, पूर्वस्वरपरित्यागेनैवमेव द्वितीयस्वराद्या अन्या कलास्तदोद्वाहिताख्यो ऽल्कार ॥ ३८, ३८- ॥ ऊर्मि लक्षयति—**मूर्च्छनाऽऽदेरिति**। मूर्च्छनाऽऽदे स्वरात्तुरीय चतुर्थ स्वर प्लुतीकृत्य त्रिरुच्चार्याद्य सकृद्गीत्वा पुनरपि चतुर्थ स्वर सकृद्गायेत, प्रथमस्वरपरित्यागेन चैवमेवान्या कला यत्र स ऊर्म्यलकार ॥ ३९, ३९- ॥ सम लक्षयति—स तु सम इति। यस्मिन्कलाया चत्वार स्वरा क्रमेणारुह्यन्ते ऽवरुह्यन्ते च, अन्या अपि

[1] ऽग्रिमस्वर

तुल्यारोहावरोहैकैकहानादपरास्तथा ।

सरिगममगरिस रिगमपपमगरि गमपधधपमग मपधनिनि-
धपम । (१३)

कला गतागतवती द्विस्वरैकैकहानतः ॥ ४१ ॥

यत्रान्यास्तादृशः स स्यात्प्रेङ्खः

सरिरिस रिगगरि गममग मपपम पधधप धनिनिध । (१४)

निष्कूजितः पुन ।

प्रसादस्य कला गीत्वा तत्कलाऽऽदेस्तृतीयकम् ॥ ४२ ॥

गत्वा ऽऽद्यगानाद्भवति

सरिसगस रिगरिमरि गमगपग मपमधम पधपनिप । (१५)

श्येन सवादियुग्मकैः ॥ ४३ ॥

क्रमात्सरिगमाद्यैः स्यात्

सप रिध गनि मस । (१६)

कला द्वित्रिचतु.स्वराः ।

आद्यस्वराद्यास्तिस्र' स्युर्द्वितीयाद्यादयस्तथा ॥ ४४ ॥

यत्रासौ क्रम इत्युक्त

कला प्रथमैकैकस्वरपरित्यागेन, स समाख्यो ऽलकार ॥ -४०, ४०- ॥ प्रेङ्ख लक्षयति—कलेति । द्विस्वरा कला, गतागते आरुह्यते ऽवरुह्यते चेत्यारोहावरोहौ तद्वती, प्रथमैकैकस्वरपरित्यागाच्चान्या कला यत्र स प्रेङ्खो ऽलकार ॥ -४१, ४१- ॥ निष्कूजित लक्षयति—निष्कूजित इति । प्रसादालकारस्य कला प्रथम-द्वितीयस्वरयुक्ता गीत्वा ऽऽदिस्वरात्तृतीय तत आद्य यदि गायेत्तदा निष्कूजिता लकार ॥ ४२, ४२ ॥ श्येन लक्षयति—श्येन इति । सवादिना युग्मचतुष्टयेन षड्जषभगाधारमध्यमादिना श्येनालकार । अत्र षड्जपञ्चमयोॠषभधैवतयो-र्गांधारनिषादयोर्मध्यमषड्जयोश्च युग्मचतुष्टयम् ॥ ४३, ४३- ॥ क्रमाख्यमलकार

सरिसरिगसरिगम रिगरिगमरिगमप गमगमपगमपध
मपमपधमपधनि। (१७)

स तूद्घट्टित उच्यते।
यत्र स्वरद्वय गीत्वा पञ्चमाच्चतुरः स्वरान् ॥ ४५ ॥
अवरोहेत्कला गायेत्तथैकैकोज्झनात्परा।

सरिपमगरि रिगधपमग गमनिधपम। (१८)

द्विरुक्ता यदि मन्द्रान्ता मन्द्रादे स्युः कलास्तदा ॥ ४६ ॥
रञ्जित

सगरिसगरिस रिमगरिमगरि गपमगपमग मधपमधपम
पनिधपनिधप। (१९)

अथ भवेदेष सनिवृत्तप्रवृत्तकः।
यत्राद्यपञ्चमौ गीत्वा तुर्यात्त्रीनवरोहति ॥ ४७ ॥
क्रमात्कला सा यत्रान्यास्तद्वदेकैकहानत।

सपमगरि रिधपमग गनिधपम। (२०)

लक्षयति—कला इति। प्रथमस्वरमारभ्य तिस्र कला गेया। एका द्विस्वरा, एका त्रिस्वरा, एका चतु स्वरा। एव द्वितीयतृतीयचतुर्थस्वरमारभ्य तिस्र कला यत्र गीयन्ते स क्रमाख्यो ऽलकार ॥ -४४, ४४- ॥ उद्घट्टित लक्षयति—स त्विति। आदित आरभ्य स्वरद्वय गीत्वा पञ्चमस्वराच्चतुर स्वरानवरोहेत्, एव द्वितीय तृतीय च स्वरमारभ्येत्येव कलात्रय यत्र स उद्घट्टिताख्यो ऽलकार ॥ ४९, ४९- ॥ रञ्जित लक्षयति—द्विरुक्ता इति। मन्द्रादे प्रथमतृतीयद्वितीयस्वरयुक्तस्य कला यदि द्विरुच्चायते, अन्ते च मन्द्रो मूर्च्छनाप्रथमस्वरो निक्षिप्यते, तदा रञ्जिताख्यो ऽलकार ॥ -४६, ४६- ॥ सनिवृत्तप्रवृत्तक लक्षयति- अथ भवेदिति। यत्र प्रथम पञ्चम च स्वर गीत्वा तुर्यात्स्वरात्त्रीन्स्वरानवरोहेण गायेत्, एवमेका कला, प्रथमैकैकस्वरपरित्यागाच्चान्यत्कलाद्वयम्, स सनिवृत्तप्रवृत्ताख्यो

यत्राद्यः स्याद् द्विर्द्वितीयचतुर्थकतृतीयकाः ॥ ४८ ॥
सकृत्कला ऽन्याश्चैकैकहानाद्वेणुरसौ मत ।
ससरिमग रिरिगपम गगमधप ममपनिध । (२१)
गीत्वा ऽऽद्यौ द्वौ चतुर्थं च यस्या तावरोहति ॥ ४९ ॥
सा कला ऽन्याश्च तादृश्यो यत्रासौ ललितस्वरः ।
सरिमरिस रिगपगरि गमधमग मपनिपम । (२२)
आदिमेन कला यत्र द्विस्वरा ऽऽद्या गतागतै ॥ ५० ॥
स्वरैरेकोत्तर वृद्धै स हुकारो निगद्यते ।
सरिस सरिगरिस सरिगमगरिस सरिगमपमगरिस
सरिगमपधपमगरिस सरिगमपधनिधपमगरिस । (२३)
ह्रादमाने प्रसन्नान्ता मन्द्रादेस्तु कला मता ॥ ५१ ॥
सगरिस रिमगरि गपमग मधपम पनिधप । (२४)
यदा ऽऽरोहे ऽवरोहे च स्वद्वितीय परित्यजेत् ।

ऽलकार -४७, ४७ ॥ वेणु लक्षयति—यत्रेति । यस्मिन्नाद्य स्वरो द्विर्गीयते, द्वितीयचतुर्थतृतीयस्वराश्च सकृद्गीयन्ते सैका कला, प्रथमैकैकस्वरपरित्यागाच्चान्या कला, स वेणुरलकार ॥ -४८, ४८- ॥ ललितस्वर लक्षयति—गीत्वेति । प्रथमस्वरद्वय गीत्वा तदनन्तर चतुर्थ गीत्वा तौ प्रथमद्वितीयाववरोहेत् । सैका कला भवति । अन्याश्च द्वितीयतृतीयतुर्यस्वराद्यास्तिस्र कला । स ललितस्वराख्यो ऽलकार ॥ -४९, ४९- ॥ हुकार लक्षयति --आदिमेनेति । आदिमेन प्रथमेन स्वरेण द्विस्वरा कला गतागतैरारोहावरोहै , ततस्त्रिस्वरा, ततश्चतु स्वरा, तत पञ्चस्वरा, तत षदस्वरा, तत सप्तस्वरा, आरोहावरोहैयत्र गीयन्ते स हुकाराख्यो ऽल्कार ॥ -५०, ५० ॥ ह्रादमान लक्षयति—ह्रादमान इति । मन्द्रादे प्रथमद्वितीयतृतीयस्वरयुक्तस्य प्रसन्नान्ता प्रथमस्वरान्ता कला यदि गीयन्ते तदा ह्रादमानाख्यो ऽलकार ॥ -५१ ॥ अवलोकित लक्षयति—यदेति ।

चतुःस्वरा समकला तदा स्यादवलोकित· ॥ ५२ ॥

सगममरिस रिमपपगरि गपधधमग मधनिनिपम । (२५)

एव सचार्यलकारा आरोहेण प्रदर्शिताः ।

एतानेवावरोहेण प्राह श्रीकरणाग्रणीः ॥ ५३ ॥

इति सचार्यलकारा ।

अन्ये ऽपि सप्तालकारा गीतज्ञैरुपदर्शिताः ।

तारमन्द्रप्रसन्नश्च मन्द्रतारप्रसन्नक· ॥ ५४ ॥

आवर्तक सप्रदानो विधूतो ऽप्युपलोलक· ।

उल्लासितश्चेति तेषामधुना लक्ष्म कथ्यते ॥ ५५ ॥

कलास्तेषा द्वितीयाद्या पूर्वैकैकप्रहाणतः ।

अष्टमस्वरपर्यन्तमारुह्याद्य व्रजेद्यदि ॥ ५६ ॥

तारमन्द्रप्रसन्नो ऽयमलकारस्तदोच्यते ।

सरिगमपधनिसंस । (१)

मन्द्रादष्टममुत्प्लुत्य सप्तकस्यावरोहणे ॥ ५७ ॥

यदा चतु स्वरा समालकारस्य कला ऽऽरोहे ऽवरोहे च द्वितीयस्वर परित्यजति तदा ऽवलोकिताख्यो ऽलकार ॥ ५२ ॥ एवमिति । एवमनेन प्रकारेण सचार्यलकारा आरोहेण कथिता । एताञ्श्रीकरणाग्रणी शार्ङ्गदेवो ऽवरोहेणापि प्राह कथितवान् ॥ ५३ ॥ इति सचार्यलकारा ॥ गीतज्ञै प्रदर्शिताल्लोकप्रसिद्धान्न्यान्सप्तालकारान्कथयति—अन्ये ऽपीति ॥ ५४, ५५ ॥ लाघवार्थ सर्वेषा साधारण लक्षणमाह—कलास्तेषामिति । एतेषा प्रथमकलालक्षणमेव वक्ष्यति—द्वितीयस्वराद्या पूर्वैकैकस्वरपरित्यागात्कला ज्ञातव्या ॥ ५५- ॥ तारमन्द्रप्रसन्नादि विशदयति —अष्टमस्वरेति । प्रथमस्वरमारभ्याष्टमस्वरपर्यन्तमारोहेण गीत्वा प्रथमस्वर यदि गायेत्तदा तारमन्द्रप्रसन्नाख्यो ऽलकार ॥ -५६, ५६- ॥ मन्द्रतारप्रसन्न

**मन्द्रतारप्रसन्नाख्यमाह माहेश्वरोत्तमः ।**

**सर्सनिधपमगरिस । (२)**

**आद्य द्वितीयमाद्य च द्विर्द्विर्गीत्वा द्वितीयकम् ॥ ५८ ॥**

**सकृदाद्य यत्कलाया गायेदावर्तकस्तु स· ।**

**ससरिरिससरिस रिरिगगरिरिगरि गगममगगमग ममपप-ममपम पपधधपपधप धधनिनिधधनिध । (३)**

**एतस्यैव कला ऽन्त्यौ द्वौ स्वरौ सत्यज्य गीयते ॥ ५९ ॥**

**यदा तदा सम्प्रदानमलकार विदुर्बुधा ।**

**ससरिरिसस रिरिगगरिरि गगममगग ममपपमम पपधधपप धधनिनिधध । (४)**

**युग्ममेकान्तरितयोस्त्यक्तादप्येवमेव चेत् ॥ ६० ॥**

**द्विर्द्विः प्रयुज्येत तदा विधूतो बुधसमत ।**

**सगसग रिमरिम गपगप मधमध पनिपनि । (५)**

**कलायामाद्ययोर्युग्म चेत्तृतीयद्वितीययोः ॥ ६१ ॥**

लक्षयति—मन्द्रादिति । मन्द्रादष्टमस्वर गीत्वा यदि सप्त स्वरा अवरोहेण गीयन्ते तदा मन्द्रतारप्रसन्नाख्यो ऽलकार ॥-५७, ५७ ॥ आवर्तक लक्षयति—आद्यमिति । आद्य स्वर द्वितीय पुनराद्य च द्विर्द्विवार गीत्वा पुनर्द्वितीयमाद्य च यदि सकृद्गायेत्तदा ऽऽवर्तकाख्यो ऽलकार ॥ -५८,५८- ॥ सप्रदान लक्षयति—एतस्यैवेति । एतस्यावर्तकस्यान्त्य स्वरद्वय विहाय यदि कला गीयन्ते तदा सप्रदानाख्यो ऽलकार ॥ -५९,५९- ॥ विधूतालकार लक्षयति—युग्ममिति । एकान्तरित स्वरद्वय द्विर्गायेत्, त्यक्तमारभ्यैकान्तरित स्वरद्वय द्विर्गायेत्, एव चतु स्वर पञ्चकलो विधूताख्यो ऽलकार ॥ ६०,६०- ॥ उपलोल लक्षयति—कलायामिति । प्रथमस्वरयोर्युग्म द्विर्गीत्वा तृतीयद्वितीयस्वरयोर्युग्म द्विर्गीयते यदा

द्विर्द्विः प्रयुज्यते तज्ज्ञैरुपलोलस्तदोच्यते ।

सरिसरिगरिगरि रिगरिगमगमग गमगमपमपम मपमपधपधप पधपधनिधनिध । (६)

द्विर्गीत्वा ऽऽद्य तृतीय च प्रथम च तृतीयकम् ॥ ६२ ॥

सकृद्गायेद्यत्कलाया तमुल्लासितमूचिरे ।

ससगसग रिरिमरिम गगपगप ममधमध पपनिपनि । (७)

इति सप्तालकारा ।

इति प्रसिद्धालकारास्त्रिषष्टिरुदिता मया ॥ ६३ ॥

अनन्तत्वात्तु ते शास्त्रे न सामस्त्येन कीर्तिता ।

रक्तिलाभ स्वरज्ञान वर्णाङ्गाना विचित्रता ॥ ६४ ॥

इति प्रयोजनान्याहुरलकारनिरूपणे ।

तदोपलोलाख्यो ऽलकार ॥ ६१,६१- ॥ उल्लासित लक्षयति—द्विरिति । यस्य कलायामाद्य स्वर द्विर्गीत्वा तृतीय प्रथम पुनस्तृतीय च सकृद्गीयते तमुल्लासितमूचिरे सगीताचार्या ॥ ६२, ६२ ॥ इति सप्तालकारा ॥ समस्तालकारकथनमशक्यमित्याह—इतीति ॥ ६३, ६३- ॥ अलकारप्रयोजनमाह—रक्तिलाभ इति । स्वराणा रञ्जकत्वज्ञान स्वरूपज्ञान स्थाय्यादिवर्णाना वैचित्र्य चालकारनिरूपणे प्रयोजनम ॥ ६४, ६४ ॥

इति प्रथमे स्वरगताध्याये षष्ठ वर्णालकारप्रकरणम् ॥ ६ ॥

---

## अथ सप्तम जातिप्रकरणम्

**शुद्धाः स्युर्जातय सप्त ता षड्जादिस्वराभिधाः ।**
**षाड्ज्यार्षभी च गाधारी मध्यमा पञ्चमी तथा ।। १ ।।**
**धैवती चाथ नैषादी शुद्धतालक्ष्म कथ्यते ।**
**यासा नामस्वरो न्यासो ऽपन्यासो ऽशो ग्रहस्तथा ।। २ ।।**
**तारन्यासविहीनास्ताः पूर्णा शुद्धाभिधा मताः ।**

(क०) गानक्रियाऽऽत्मकवर्णालकारनिरूपणानन्तरमल्कार्यतया प्रतीत गीताद्यनुगतत्वेन प्रसक्ताना जातीना लक्षणमुद्दिष्ट विवेक्तुकामस्तल्लक्ष्यत्वेनाक्षिप्ता जाती सप्रभेद लक्षयितुमुद्दिशति— **शुद्धाः स्युरित्या**दिना । **जातय** इति । यथायोग ग्रामद्वयाज्जायन्त इति जातय । अत एवानित्यतया साकल्येन सामान्यरूपजातिलक्षणाभावे ऽप्यनेकगेयव्यक्तिष्वनुवृत्तत्वमात्रेण गोत्वादिजातिवज्जातय इति वा, गीतजात तस्योपरञ्जन वा ऽऽभ्यो जायत इति जातय इति वा जातिशब्दव्युत्पत्तिर्मतङ्गाद्यभिमता द्रष्टव्या । जातय शुद्धा वक्ष्यमाणशुद्धत्वलक्षणोपेता सप्त स्यु । ता षडजादिस्वराभिधा , षड्जादिस्वराणामभिधा इवाभिधा यासा ता इत्युपमानपूर्वपदो बहुव्रीहि , यद्वा षड्जादिस्वरवाचका षड्जादिशब्दा प्रकृतित्वेनाभिधा सज्ञा यासा ता । अत्राभिधाशब्दस्यावृत्ति कर्तव्या । तथैवोद्दिशति— **षाड्जीत्या**दिना । तासा शुद्धत्व किमित्यत आह—**शुद्धतालक्ष्मे**ति । यासा षाडज्यादीना नामस्वर षड्जादिरेव वक्ष्यमाणलक्षणन्यासत्वाद्यवस्थाऽऽपन्नो भवति, याश्च तारन्यासविहीनास्तारस्थाने न्यासरहिता इति विशेषनिषेध शेषाभ्यनुज्ञा गमयतीति मन्द्रमध्यस्थानयोर्यथायोग न्यासविधिरिष्यते । यदपि भरतेन 'न्यास शुद्धासु मन्द्रे स्यात्' इत्युक्त तत्तारनिषेधपर द्रष्टव्यम । अन्यथा

**विकृता न्यासवर्जैतल्लक्ष्महीना भवन्त्यमूः ॥ ३ ॥**

षाड्ज्या मध्यषड्जन्यासत्व मतङ्गोक्त लक्ष्ये विरुध्येत । पूर्णा सप्तस्वरयुक्ता । शुद्धाभिधा शुद्धा इति सज्ञा यासा ता ॥ १—२- ॥

(सु०) जातीर्निरूपयति—**शुद्धा** स्युरिति । शुद्धा सप्त जातयो भवन्ति । तासा कि नामेत्यपेक्षायामाह—ता **षड्जादिस्वराभिधा** इति । षड्जादय सप्त स्वरास्तासा नाम्नि कारणभूता । तासा तान्येव स्वरसबन्धीनि नामानि कथयति—**षाड्जीति** । तासा शुद्धतालक्षण प्रतिज्ञाय कथयति—**शुद्धतेति** । यासा जातीना नामस्वर एव न्यासो ऽपन्यासो ऽशो ग्रहश्च भवति, न्यासस्वरश्च तारो न भवति ता शुद्धा जातयो ज्ञातव्या । न्यासादिलक्षण वक्ष्यति ॥१—२ ॥

(क०) अमू शुद्धा षाड्ज्यादय एव । **न्यासवर्जैतल्लक्ष्महीना** इति । जातीना शुद्धतायामभिहितेषु नामस्वरस्यैव न्यासापन्यासाशग्रहत्वेषु सप्तपूर्णत्वेषु पञ्चसु लक्षणेषु मध्ये न्यासवर्जं न्यासनियमस्यैकस्य सङ्ग परिहृत्यैतल्लक्ष्मभिरपन्यासाशग्रहपूर्णत्वैर्हीना नियतैरेतैर्वर्जिता । अयमर्थ — नामस्वरमेव न्यास कृत्वा ऽपन्यासादीन्स्वरान्तराणि कुर्यादिति । एव कृता यदि, तदा विकृता विकृतावस्थाऽऽपन्ना भवन्ति, न तु विकृतससर्गजात-जातिवद्व्यपदेशान्तरभाज इत्यर्थ । अत्र न्यासनियमस्य परित्यागो नेष्ट , तस्मिन्नपि परित्यक्ते सति विकृतासु जात्यन्तरभेदकत्वेन प्रधानभूतावयवाननु-वृत्तौ तासा तत्तच्छुद्धजातिभेदत्वप्रतीतिर्न स्यात् ॥ ३ ॥

(सु०) विकृता जाती कथयति—**विकृता** इति । न्यास विनोक्तलक्षण-हीना विकृता । न्यासलक्षणहीनत्व तारन्यासत्वम् । तत्कि विकृताना न सभवति ? न । तदुक्त मतङ्गेन—'या शुद्धास्तासु नामकारी न्यासो नियमेन मन्द्रो भवति , या विकृतास्तासु नामकारी मन्द्रो भवतीत्यनियम । तत्र शुद्धाना

**सपूर्णत्वग्रहाशापन्यासेष्वेकैकवर्जनात् ।**
**भवन्ति भेदाश्चत्वारो द्वयोस्त्यागे तु षण्मताः ॥ ४ ॥**
**त्यागे त्रयाणा चत्वार एकस्त्यक्ते चतुष्टये ।**
**भेदाः पञ्चदशैवैते षाड्ज्याः सद्भिर्निरूपिता· ॥ ५ ॥**
**तत्राष्टौ पूर्णताहीना सप्त त्वितरवर्जिताः ।**
**द्विधा स्युः पूर्णताहीनाः षाडवौडुवभेदतः ॥ ६ ॥**
**अतो ऽष्टावधिका आर्षभ्यादिष्वौडुवजातिषु ।**
**अतस्त्रयोविंशतिधा षट्सु प्रत्येकमीरिता· ॥ ७ ॥**

जातीना शुद्धत्व विकृतत्व च रूपद्वयमस्ति, षड्जकैशिक्यादीनामेकादशजातीना तु विकृतत्वमेव, न शुद्धत्वम् ।' इति । जातिशब्दव्युत्पत्तिस्तु मतङ्गेनोक्ता— 'श्रुतिस्वरग्रामसमूहाज्जायन्त इति जातय , यद्वा ग्रहादिभ्यो जायन्त इति जातय , अथ वा जायते रसप्रतीतिराभ्य इति जातय , यद्वा सकलस्य रागादेर्जन्महेतुत्वाज्जातय , अथ वा यथा नराणा ब्राह्मणत्वादयो जातय शुद्धा विकृताश्च, एवमेता अपीति जातय ॥' इति ॥ -३ ॥

(क०) न्यासव्यतिरिक्तसपूर्णत्वादिषु चतुर्षु लक्षणेष्वेकद्व्यादिपरित्यागेन सभूतान्भेदान्षाडज्यादिषु यथासभव परिगणयति—**सपूर्णत्वेत्यादिना**। एकैकवर्जनादिति सपूर्णत्वादीना स्वरूपनिषेधो न क्रियते, जात्यनुत्पत्ति प्रसङ्गात्, अपि तु नियतस्वरपर्युदासात्स्वरान्तरविधिर्विज्ञायते । **भवन्ति भेदाश्चत्वार** इति । सपूर्णत्ववर्जने कृते ग्रहाशापन्यासयुक्त एक , ग्रहवर्जने सपूर्णत्वाशापन्यासवान्द्वितीय , अशवर्जने सपूर्णत्वग्रहापन्यासवास्तृतीय , अपन्यासवर्जने सपूर्णत्वग्रहाशयुक्तश्चतुर्थो भेद , इति चत्वारो भेदा । **द्वयोस्त्यागे तु षण्मता** इति । सपूर्णत्वग्रहाभ्या सपूर्णत्वाशाभ्या सपूर्णत्वापन्यासाभ्या ग्रहाशाभ्या ग्रहापन्यासाभ्यामशापन्यासाभ्या त्यक्ताभ्या षड्

मेदा भवन्ति । **त्यागे त्रयाणा चत्वार** इति । सपूर्णत्वग्रहाशै सपूर्णत्व-ग्रहापन्यासै सपूर्णत्वाशापन्यासैर्ग्रहाशापन्यासैस्त्यक्तैश्चत्वारो भेदा । चतुष्टय त्यक्त एको भेद इत्येते पञ्चदशैव मेदा षाडज्या निरूपिता ॥ सपूर्ण-ताहीनानामवान्तरभेद वक्तु विभजते—**तत्राष्टाविति** । तत्र पञ्चदशसु मध्ये ऽष्टौ मेदा पूर्णताहीना सपूर्णत्वरहिता । सप्त त्वितरवर्जिता । सपूर्णत्व-युक्तत्वे सतीतरेषु ग्रहाशापन्यासेषु यथायोगमेकेन द्वाभ्या त्रिभिर्वा वर्जिता द्विधा स्यु । पूर्णताहीना अष्टौ मेदा षाडवौडुवभेदतो द्विधा स्यु षोडश भवन्तीत्यर्थ । ननु पूर्णताहीनाना मेदाना चतु स्वरादिभिरपि भेदै सह षड्विधत्वे सभवति कथ द्वैविध्यमिति चेत्, उच्यते—पूर्णताहीना इत्यनेन चतु स्वरादीना च प्रतीतौ सत्यामपि नञिवयुक्तन्यायन जातिरागसपाद-कत्वात्सपूर्णत्वसदृशप्रतिपत्त्या षाडवौडुवयोरेवात्र ग्रहणमिति । चतु स्वर प्रयोगस्तु भरतेनापकृष्टध्रुवायामेवोक्त । त्रिस्वरादीना प्रयोगस्तु सामव्य-तिरिक्तगांदौ[1] द्रष्टव्य । षाड्ज्यपेक्षया ऽऽर्षभ्यादिषु षट्सु जातिषु भेदा-धिक्य दर्शयति—**अतो ऽष्टाविति** । अतो ऽस्या पूर्णताहीनेषु षोडशस्वष्टा-भिरेव षाडवभेदै पूर्णतायुक्तैरितरवर्जितै सप्तभि सह पञ्चदशभेदवत्त्वे-नोक्ताया षाड्ज्या इतरास्वार्षभ्यादिष्वौडुवजातिष्वौडुवावस्थया ऽपि युक्ता-स्वष्टावौडुवभेदा अधिका । अत कारणात्ता आर्षभ्यादय षड् जातय प्रत्येक त्रयोविशतिधेरिता इति सप्तसु जातिषु विकृतभेदा मिलितास्त्रिपञ्चा-शदुत्तर शत भवन्ति ॥ ४—७ ॥

(सु०) विकृतभेदान्गणयति— सपूर्णत्वेति । शुद्धजातीना चत्वारि लक्षणानि—नामस्वरग्रहत्व नामस्वराशत्व नामस्वरापन्यासत्व सपूणत्व चेति । तत्र सपूर्णत्वपरित्यागेनैको विकृतभेद, ग्रहपरित्यागेनैक, अशपरित्यागेनैक,

[1] सामगाधर्ष्व

**विकृताना तु ससर्गाज्जाता एकादश स्मृता ।**
**स्यात्षड्जकैशिकी षड्जोदीच्यवा षड्जमध्यमा ॥ ८ ॥**
**गाधारोदीच्यवा रक्तगाधारी कैशिकी तथा ।**
**मध्यमोदीच्यवा कार्मारवी गाधारपञ्चमी ॥ ९ ॥**
**तथा ऽऽन्ध्री नन्दयन्तीति तद्धेतूनधुना ब्रुवे ।**
**षाड्जीगाधारिकायोगाज्जायते षड्जकैशिकी ॥ १० ॥**

अपन्यासपरित्यागेनैक , एवमेकैकपरित्यागे चत्वारो भेदा । सपूर्णत्वग्रहपरित्यागेनैक , सपूर्णत्वाशपरित्यागेनैक , सपूर्णत्वापन्यासपरित्यागेनैक , ग्रहाशपरित्यागेनैक , ग्रहापन्यासपरित्यागेनैक , अशापन्यासपरित्यागेनैक , एव लक्षणद्वयपरित्यागे षड् भेदा विकृता भवन्ति । सपूर्णत्वग्रहाशपरित्यागेनैक , सपूर्णत्वग्रहापन्यासपरित्यागेनैक , सपूर्णत्वाशापन्यासपरित्यागेनैक , ग्रहाशापन्यासपरित्यागेनैक , एव लक्षणत्रयपरित्यागे चत्वारो भेदा विकृता भवन्ति । लक्षणचतुष्टयपरित्याग एक एव भेद । एव षाड्ज्या पञ्चदश भेदा भवन्ति। तेषु पूर्णताहीना अष्टौ, इतरलक्षणहीना सप्त। षाड्ज्या षाडवत्वेनैवासपूर्णत्वम्। अन्यासा षाडवत्वेनौडुवितत्वेन च भेदाधिक्य कथयितुमाह—**द्विधा स्युरिति**। पूर्णताहीना भेदा षट्स्वरत्वेन पञ्चस्वरत्वेन च द्विविधा । अत आर्षभ्यादिषु षट्सु जातिष्वष्टौ भेदा अधिका विकृता भवन्ति। अत प्रत्येक तासा त्रयोविशतिर्विकृता भेदा । एतासा मिलिता विकृतभेदास्त्रिपञ्चाशदधिक शत भवन्ति ॥ ४—७ ॥

(क०) उक्तविकृतभेदससर्गोत्पन्नाना व्यपदेशान्तरभाजा विकृतजातीना सख्यामाह—**विकृताना त्विति**। तुशब्दो भिन्नक्रम — विकृताना ससर्गाज्जातास्त्विति । उक्ता विकृता शुद्धजातीनामेवावस्थाऽन्तराणि, एता पुनस्तद्विकृतभेदससर्गोत्पन्नत्वान्न तथेति तुशब्दार्थ ॥ ता उद्दिश्य तासा निमित्तभूत विकृतावस्थाऽऽपन्नषाड्ज्यादिससर्गं दर्शयति—**स्यात्षड्जकै**

षाड्जिकामध्यमाभ्या तु जायते षड्जमध्यमा ।
गाधारीपञ्चमीभ्या तु जाता गाधारपञ्चमी ॥ ११ ॥
गाधार्यार्षभिकाभ्या तु जातिरान्ध्री प्रजायते ।
षाड्जी गाधारिका तद्वद्धैवती मिलितास्त्विमा ॥ १२ ॥
षड्जोदीच्यवती जातिं कुर्युः कार्मारवी पुन ।
उत्पादयन्ति नैषादीपञ्चम्यार्षभिका युताः ॥ १३ ॥
नन्दयन्ती तु गाधारीपञ्चम्यार्षभिका युताः ।
गाधारी धैवती षाड्जी मध्यमेति युतास्त्विमा ॥ १४ ॥
गाधारोदीच्यवा कुर्युर्मध्यमोदीच्यवा पुनः ।
एता एव विना षाड्ज्या पञ्चम्या सह कुर्वते ॥ १५ ॥
कुर्युस्ता रक्तगाधारी नैषादी च न धैवती ।
आर्षभी धैवती त्यक्त्वा पञ्चभ्यः कैशिकी भवेत् ॥ १६ ॥

शिकीत्यादिना पञ्चभ्य कैशिकी भवेदित्यन्तेन । अत्राष्टादशसु जातिसज्ञासु षाड्ज्यादीना कासाचिदन्वर्थतया योगरूढता, कार्मारव्यादीना तु कतिपयाना केवलरूढतैवेति मन्तव्यम् ॥ ८—१६ ॥

(सु०) विकृतससर्गाज्जाता एकादश जातीर्नित्यविकृता कथयति—विकृताना त्विति । एतासामेकादशाना विकृताना जातीना कारणभूता जाती कथयति—षाड्जीति । षाड्जीगाधारिकाभ्या षड्जकैशिकी जायते । षाड्जी मध्यमाभ्या षड्जमध्यमा । गाधारीपञ्चमीभ्या गाधारपञ्चमी । गाधार्यार्षभिकाभ्या-मान्ध्री । षाड्जीधैवतीगाधारीभ्य षड्जोदीच्यवती । नैषादीपञ्चम्यार्षभीभ्य कार्मारवी । गाधारीपञ्चम्यार्षभीभ्यो नन्दयन्ती । गाधारीधैवतीषाड्जीमध्यमाभ्यो गाधारोदीच्यवा । गाधारीधैवतीमध्यमापञ्चमीभ्यो मध्यमोदीच्यवा । गाधारी-

चतस्रः षड्जशब्दिन्यो नैषादी धैवती तथा ।
आर्षभी चेति सप्तैताः षड्जग्रामस्य जातय ॥ १७ ॥
शेषाः स्युर्मध्यमग्रामे पूर्णत्वाद्यधुनोच्यते ।
कार्मारव्यथ गाधारपञ्चमी षड्जकैशिकी ॥ १८ ॥
मध्यमोदीच्यवेत्येता नित्यपूर्णा प्रकीर्तिताः ।
षाड्जी च नन्दयन्त्यान्ध्री गाधरोदीच्यवेत्यमू ॥ १९ ॥
सपूर्णषाडवाः प्राह चतस्रः काश्यपो मुनिः[1] ।
दशावशिष्टा सपूर्णषाडवौडुविता मता ॥ २० ॥

नैषादीमध्यमापञ्चमीभ्यो रक्तगाधारी । षाड्जीगाधारीमध्यमापञ्चमीनैषादीभ्य कैशिकी ॥ ८—१६ ॥

(क०) सर्वासामपि जातीना ग्रामविभाग दर्शयति—**चतस्र** इत्यादिना । अष्टादशसु जातिषु मध्ये यथायोग सपूर्णत्वादिना साधर्म्य माह—**पूर्णत्वादीत्या**दिना । पूर्णत्वादीत्यादिशब्देन षाडवत्वमौडुवत्व च गृह्यते । नित्यपूर्णा नित्य सदा पूर्णा , न कदाचिदपि षाडवौडुवावस्थाऽऽपन्ना इत्यर्थ । सपूर्णषाडवा , सपूर्णाश्च ता षाडवाश्च । षाड्जी नन्दयन्त्यान्ध्रीगाधारोदीच्यवाश्चतस्रो जातयो भरतादिमतपर्यालोचनया सपूर्ण त्वेन षाडवत्वेन च नियमिता इति निश्चित्य कश्यन्त इत्यर्थ । एव च सति यदा गाता ता षाडवीकर्तुमिच्छति, तदा वक्ष्यमाणलक्षणानुसारेण षाडज्या निषादलोपेन, नन्दयन्त्यान्ध्र्यो षड्जलोपेन गाधारोदीच्यवाया-मृषभलोपेन च षाडवत्व नियत द्रष्टव्यम् ॥ **दशावशिष्टा** इति । अवशिष्टा नित्यपूर्णाभ्यश्चतसृभ्य सपूर्णषाडवाभ्यश्चतसृभ्यश्च व्यतिरिक्ता दश—

[1] सोढलात्मज

**पञ्चमीमध्यमाषड्जमध्यमाऽऽख्यासु जातिषु ।**
**स्वरसाधारण प्रोक्त मुनिभिर्भरतादिभिः ॥ २१ ॥**

आर्षभी गाधारी मध्यमा पञ्चमी धैवती नैषादी षड्जोदीच्यवा षड्जमध्यमा रक्तगाधारी कैशिकी चेति । सपूर्णषाडवौडुविता , सपूर्णाश्च षाडवाश्चौडुविताश्च ता इति कर्मधारय , दशाप्येता सपूर्णत्वादिव्यवस्थाऽऽपन्ना इत्यर्थ । तद्यथा—आर्षभी षड्जलोपात्षाडवा, सपलोपादौडुवा । गाधारीरक्तगाधारीकैशिक्यो रिलोपेन षाडवा , रिधलोपेनौडुवा । मध्यमापञ्चम्यौ गलोपेन षाडवे, निगलोपेनौडुवे । धैवतीनैषाद्यौ पलोपेन षाडवे, सपलोपेनौडुवे । षड्जोदीच्यवा रिलोपेन षाडवा, परिलोपेनौडुवा । षडजमध्यमा निलोपेन षाडवा, निगलोपेनौडुवेति ॥ १७—२० ॥

(सु०) एतासा कियत्य कस्मिन्ग्राम इत्यपेक्षायामाह—**चतस्र** इति । एतासा जातीना मध्ये षड्जशब्दवत्यश्चतस्रो जातय षाड्जी षड्जकैशिकी षड्जमध्यमा षड्जोदीच्यवा चेति, तथा नैषादी धैवत्यार्षभी चेत्येता सप्त षड्जग्रामोत्पन्ना , शेषा एकादश मध्यमग्रामोत्पन्ना ॥ जातीना पूर्णत्वषाडवत्वौडुवितत्वानि प्रतिज्ञाय कथयति—**पूर्णत्वादी**ति । कार्मारवीगाधारपञ्चमीषड्जकैशिकीमध्यमोदीच्यवाना पूणत्वमेव, षाडवत्वमौडुवितत्व च नास्ति । षाड्जीनन्दयन्त्यान्ध्रीगाधारोदीच्यवाना सपूर्णत्व षाडवत्व च विद्यते, औडुवितत्व नास्ति । अवशिष्टाना दशाना सपूर्णत्व षाडवत्वमौडुवितत्व चास्ति ॥ १७—२० ॥

(क०) तत्र कासुचिज्जातिषु भरताद्युक्त स्वरसाधारणप्रयोगे नियम दर्शयति—**पञ्चमीत्या**दिना ॥ अनेनैव वचनेन पञ्चमीमध्यमाषडजमध्यमासु तिसृषु जातिषु यथायोग षड्जमध्यमपञ्चमानामन्यतमस्याशत्वे स्वरान्तरस्याशत्वे चोभयत्र स्वरसाधारणे प्राप्ते, स्वरान्तराशत्वपक्षनिवृत्त्यर्थं स्वर-

**अशेषु समपेष्वेतद्यथास्वनियमाद्भवेत्[1] ।**
**एतदल्पनिगास्वाहुः कम्बलाश्वतरादयः ॥ २२ ॥**
**अल्पद्विश्रुतिके रागभाषाऽऽदावपि तन्मतम् ।**
**निगयोरशयोः षड्जमध्यमाया न तद्भवेत् ॥ २३ ॥**
**विकृता एव तत्रापि स्वरसाधारणाश्रया ।**

साधारण परिसख्याति—**अशेषु समपेष्विति** । एतत्स्वरसाधारणम् । यथास्वनियमात्, स्वनियम 'प्रयोज्यौ षड्जमुच्चार्य' इत्यादिनोक्त, तमनतिक्रम्य । अत्रेय व्यवस्था—पञ्चम्या पञ्चमे ऽशे, मध्यमाषड्ज-मध्यमयो प्रत्येक षडजमध्यमपञ्चमेष्वशेषु साधारणप्रयोग इति कम्बलाश्व-तरादय । एतत्स्वरमाधारणम् । काकल्यन्तराविल्यर्थ । अल्पनिगासु लोप्यनिषादगाधारासु जातिषु पञ्चमीमध्यमाषड्जमध्यमाऽऽख्यासु । एत-दुक्त भवति —निषादगाधारयोरन्यतरस्मिन्नशे ऽन्यस्य तत्सवादित्वेन लोप्य त्वाभावात्काकल्यन्तरप्रयोगो न कर्तव्य इति । अल्पद्विश्रुतिके लोप्यनिषाद-गाधारे । **रागभाषाऽऽदावपीति** । अत्र रागशब्देन ग्रामरागोपरागरागास्त्रयो ऽपि गृह्यन्ते, भाषाशब्देन भाषाविभाषाऽन्तरभाषास्तिस्रो गृह्यन्ते, आदि-शब्देन पुना रागाङ्गभाषाऽङ्गक्रियाङ्गोपाङ्गचतुष्टय गृह्यत इति दशविधो ऽपि रागप्रपञ्चो गृहीत । तत्रापिशब्देन न केवलमल्पद्विश्रुतिकासु जातिष्वेव, किं त्वल्पद्विश्रुतिके रागादौ सर्वत्रापीति द्योत्यते । तत्काकल्यन्तरसाधारण मत भरतादीना समतम् ॥ उक्तमर्थं व्यतिरेकेणाप्युदाहृत्य द्रढयन्नाह—**निगयोरशयोरिति** । 'पञ्चमीमध्यमा' इति भरतमतानुसारिणा वचनेन, 'एतदल्पनिगासु- इति कम्बलाश्वतरादिमतानुसारिणा वचनेन चोपात्तासु

[1] यथास्व नियमाद्भवेत

एकाशा नन्दयन्ती च मध्यमोदीच्यवा तथा ॥ २४ ॥
गाधारपञ्चमीत्येतास्तिस्रो द्व्यशास्तु धैवती ।
गाधारोदीच्यवा चाथ पञ्चमीत्युदिता इमाः ॥ २५ ॥

पञ्चमीमध्यमाषड्जमध्यमाषाड्जीषु चतसृषु षड्जमध्यमाया विकृतससर्गजत्वेन केवलविकृतत्वाच्छुद्धताया अभावे ऽपीतरासा तिसृणा शुद्धावस्थाया विकृतावस्थाया चाविशेषेण स्वरसाधारणे प्राप्ते नियमयति—**विकृता एवेति**। **तत्रापीति**। तत्र पञ्चमीमध्यमाषाड्जीषु तिसृषु। अयमभिसधि — षाड्ज्यादिषु शुद्धावस्थाया विकृतस्वरप्रयोगो न कर्तव्य इति ॥ २१—२३- ॥

(सु०) **पञ्चमीति**। पञ्चमीमध्यमाषड्जमध्यमासु जातिषु स्वरसाधारण प्रयोक्तव्यमित्युक्त श्रीभरतादिभि ॥ २१ ॥ **अशेष्विति**। षड्जमध्यमपञ्चमेष्वशेष्वेतत्स्वरसाधारण नियमात्कर्तव्यम्। कथम्? यथास्व स्वकीय स्थानमनतिक्रम्य। यदा षड्जो ऽशस्वरस्तदा षड्जसाधारणम्, यदा मध्यमपञ्चमौ तदा मध्यमसाधारणमिति। एतत्स्वरसाधारणमल्पनिषादगाधारासु जातिषु भवतीति कम्बलाश्वतरादय आहु। अल्पनिषादगाधारे रागभाषाऽऽदावपि स्वरसाधारण प्रयोक्तव्यमिति तेषा कम्बलाश्वतरादीना मतम् ॥ २२, २२- ॥ **निगयोरिति**। यदा षड्जमध्यमाया निषादगाधारावशौ तदा तत्स्वरसाधारण न प्रयोक्तव्यम्। प्रायस्तु विकृता एव स्वरसाधारणयोगिन्य ॥ २३, २३- ॥

(क०) अथाष्टादशसु जातिषु यथायोगमेकाशकादिसप्ताशकान्त वक्ष्यमाणलक्षणाशस्वरसबन्धकथनेन सभूतामशसख्यामवधारयति—**एकाशा** इत्यादिना **जातिष्वष्टादशस्विम** इत्यन्तेन। एकाशा एक स्वरो ऽशो यासा ता। नन्दयन्तीमध्यमोदीच्यवागाधारपञ्चमीना तिसृणा वक्ष्यमाणलक्षणानुसारेण प्रत्येक पञ्चमो ऽशो वेदितव्य। **द्व्यशास्त्विति**। धैवतीगाधारोदीच्यवापञ्चम्यो द्व्यशा। तत्र धैवत्यामृषभधैवतावशौ, गाधारोदीच्यवाया षड्ज-

**नैषाद्यार्षभिकाषड्जकैशिक्यस्त्र्यंशिका मताः ।**
**आन्ध्रीकार्मारवीषड्जोदीच्यवाश्चतुरंशिकाः ॥ २६ ॥**
**पञ्चांशा रक्तगांधारी गांधारी मध्यमा तथा ।**
**षाड्जीत्येताश्चतस्रः स्युः षडंशैकैव कैशिकी ॥ २७ ॥**
**सप्तांशा सूरिभिः षड्जमध्यमा परिकीर्तिता ।**
**इति त्रिषष्टिरंशाः स्युर्जातिष्वष्टादशस्विमे ॥ २८ ॥**

मध्यमौ, पञ्चम्यामृषभपञ्चमौ । **त्र्यंशिका मता** इति । नैषाद्यार्षभिकाषड्जकैशिक्यस्त्र्यंशिका । तत्र नैषाद्यां निषादषड्जगांधारास्त्रयो ऽंशा , आर्षभ्यामृषभनिषादधैवता , षड्जकैशिक्यां षड्जगांधारपञ्चमा । **चतुरंशिका** इति। आन्ध्रीकार्मारवीषड्जोदीच्यवाश्चतुरंशिका । तत्रान्ध्र्यामृषभगांधारपञ्चमनिषादाश्चत्वारो ऽंशा , कार्मारव्यामृषभपञ्चमधैवतनिषादा , षड्जोदीच्यवायां षड्जमध्यमधैवतनिषादा । **पञ्चांशा** इति । रक्तगांधारीगांधारीमध्यमाषाड्ज्यश्चतस्र पञ्चांशा । तत्र रक्तगांधार्यां सगमपनिषादा पञ्चांशा , गांधार्यामपि तद्वत्, मध्यमायां सरिमपधा , षाड्ज्यां सगमपधा । **षडंशेति** । एकैव कैशिकी षडंशा । तत्रर्षभव्यतिरिक्ता षट् स्वरा अंशा । **सप्तांशेति** । षड्जमध्यमा सप्तांशा । तस्यां षड्जादय सप्त स्वरा अंशा स्यु ॥ -२४—२८ ॥

(सु०) अंशान्संख्याति—**एकांशा** इति। नन्दयन्तीमध्यमोदीच्यवागांधारपञ्चमीष्वेक एको ऽंश , धैवतीगांधारोदीच्यवापञ्चमीषु द्वौ द्वावंशौ, नैषाद्यार्षभीषड्जकैशिकीषु त्रयस्त्रयो ऽंशा , आन्ध्रीकार्मारवीषड्जोदीच्यवासु चत्वारश्चत्वारो ऽंशा , रक्तगांधारीगांधारीमध्यमाषाड्जीषु पञ्च पञ्चांशा , कैशिक्येकैव षडंशा, षड्जमध्यमा सप्तांशा । एवमष्टादशसु जातिषु त्रिषष्टिरंशा भवन्ति । इयं तु संख्या जातीनां संपूर्णत्वे । षाडवत्वे तु सप्तचत्वारिंशदंशा भवन्ति । तदुक्त

**ग्रहांशतारमन्द्राश्च न्यासापन्यासकौ तथा ।**
**अपि सन्यासविन्यासौ बहुत्व चाल्पता ततः ॥ २९ ॥**
**एतान्यन्तरमार्गेण सह लक्ष्माणि जातिषु ।**
**षाडवौडुविते क्वापीत्येवमाहुस्त्रयोदश ॥ ३० ॥**

मतङ्गेन—"योज्या सप्ताधिकास्ते च चत्वारिंशच्च षाडवे । अस्यार्थ —षाडवविधौ क्रियमाणे सप्तचत्वारिंशदशा भवन्ति । कथम्? चतसृणा जातीना नित्यपूर्णाना नवांशा पातनीयास्त्रिषष्टिमध्ये । एषु नवांशेषु पातितेषु चतुष्पञ्चाशदशा अवशिष्यन्ते । तत्रापि षड्जमध्यमा षाडजी षड्जोदीच्यवा कैशिकी रक्तगाधारीत्यासा सप्तांशा अपवादभूता पातनीया । तेषु सप्तांशेषु पातितेषु सप्तचत्वारिंशदशा भवन्ति ।" इति । औडुवविधौ तु त्रिंशदशा भवन्ति । तदुक्त मतङ्गेन—"तथा ऽपवादनिर्मुक्तास्त्रिंशदौडुविते तु ते । अस्यार्थ " पूर्ववत् । षोडशसु पातितेषु नित्यपूर्णषाडवाना द्वादश पातनाया । अन्ये चापवादभूता पञ्च । एव त्रिंशदौडुविते ते ऽशा भवन्ति । तथा चाह भरत —

'पञ्चस्वरमौडुवित विज्ञेय दशविधप्रयोगज्ञै ।
त्रिंशत्प्रकारविहित पूर्वोक्त लक्षण तस्य ॥'

इति । अपकृष्टध्रुवासु जातीना चतु स्वरप्रयोगो ऽप्युक्तो भरतेन—

'षट्स्वरस्य प्रयोगो ऽस्ति तथा पञ्चस्वरस्य च ।
चतु स्वरप्रयोगो ऽपि ह्यपकृष्टध्रुवास्वथ ॥'

इति ॥ २४—२८ ॥

(क०) अथ 'त्रयोदशविध जातिलक्ष्म' इत्युद्देशे लक्ष्यत्वेनोपात्तजातिनिरूपणावसरे तदवयवत्वेन च प्राप्तास्त्रयोदशापि ग्रहादीन्विभज्य क्रमेण लक्षयति—**ग्रहांशतारमन्द्राश्चे**त्यादिना । **षाडवौडुविते क्वापीति** । नित्यपूर्णाभ्यो ऽन्यासु यथायोगमित्यर्थ । यद्यपि भरतमतङ्गादिभि सन्यासविन्यासयोर्विदार्याश्रितत्वादपन्यासे ऽन्तर्भावेणान्तरमार्गस्याप्यशावयव

**गीतादिनिहितस्तत्र स्वरो ग्रह इतीरितः ।**
**तत्राशग्रहयोरन्यतरोक्तावुभयग्रह ॥ ३१ ॥**
**यो रक्तिव्यञ्जको गेये यत्सवाद्यनुवादिनौ ।**
**विदार्या बहुलौ यस्मात्तारमन्द्रव्यवस्थिति ॥ ३२ ॥**
**य स्वय यस्य सवादी चानुवादी स्वरो ऽपरः ।**
**न्यासापन्यासविन्याससन्यासग्रहता गत ॥ ३३ ॥**
**प्रयोगे बहुलः स स्याद्वाद्यशो योग्यतावशात् ।**
**बहुलत्व प्रयोगेषु व्यापक त्वशलक्षणम् ॥ ३४ ॥**

वानामन्योन्यसघटनात्मकम्याशादिसबन्धाधीनसिद्धे पृथगुद्देशो नापेक्षित इति दशक जातिलक्षणमित्युक्तम्, तथा ऽपि सन्यासविन्यासयो पृथगवयवत्वेनान्तरमार्गस्य तु सत्स्वशादिष्ववयवेषु तेन विना प्रयोगासिद्धेस्तस्यावश्यिकत्वाल्लक्षणेषु पृथगुद्दिश्य त्रयोदशेत्युक्त ग्रन्थकारेण ॥ **गीतादिनिहित** इति । तत्र तेषु त्रयोदशसु मध्ये, गीतादिनिहित, गीतस्य रञ्जकस्वरसदर्भस्यादावुपक्रमे निहित । गृहीत इति येन गीत गृह्यत इति वा ग्रह । तत्राशग्रहयोरित्यत्र तत्रेति गीतगानलक्षण इत्यर्थ । अशग्रहयोरन्यतरोक्तौ, यत्र कचिदश एवोच्यते न ग्रह, यत्र च ग्रह एवोच्यते न त्वश, तत्रोभयग्रह उभयोर्ग्रहाशयोर्ग्रहो ग्रहण भवति । अयमर्थ —यत्र गीतलक्षणे यस्य स्वरस्याशत्वमुक्त नान्यस्य ग्रहत्व तत्र तस्यैव ग्रहत्वमप्युक्तम्, यस्य च ग्रहत्वमुक्त नान्यस्याशत्व तत्रापि तस्यैवाशत्वमप्युक्तमिति । एतेनैतदुक्त भवति—यस्या जातौ ये यावन्तो ऽशास्तत्र ते तावन्त एव ग्रहा इति । सर्वासु जातिषु ग्रहा अपि त्रिषष्टिरित्यर्थ । तथा चोक्त भरतेन—

‘ त्रिषष्टिरशा विज्ञेयास्तासा चैवाशवद् ग्रहा ’ इति ।

मतङ्गेनापि—'सो ऽशवत्रिषष्टिभेदभिन्नो बोद्धव्य ' इति ॥ **यो रक्ती-त्याद्यशलक्षणम्** । रक्तिव्यञ्जकत्वादिधर्मयुक्तो य स्वर स सगीतभागत्वादश इति व्यपदिश्यते गेये । रक्तिव्यञ्जक इत्येतावत्युच्यमाने स्वरगतरक्ति मात्रव्यञ्जकत्व स्वरान्तराणामप्यविशिष्टमितीह स्वरसदर्भभेदप्रतिनियतरक्ति-विशेषव्यञ्जकत्वस्य विवक्षितत्वाद्गेय इति विशेषण यथा वाक्यार्थभूतरसा दिव्यञ्जकत्व विवक्षितान्यपरवाच्ये ऽसलक्ष्यक्रमध्वनौ स्वार्थमभिदधत पदस्य । यत्सवाद्यनुवादिनौ । यस्याशत्वेन लिलक्षयिषितस्य[1] स्वरस्य । अस्मिल्लँक्षणे प्रतिवाक्य यच्छब्दो विधेयाशस्वरपर । सवाद्यनुवादिनौ पूर्वोक्तलक्षणौ स्वरौ विदार्या गीतखण्डे बहुलौ प्रचुरप्रयोगौ, यस्मात्तारमन्द्रव्यवस्थिति, यम-वधि कृत्वोत्तरस्वरारोहेण तारव्यवस्था ऽधस्तनस्वरावरोहेण मन्द्रव्यवस्था च भवति, य स्वय यस्य सवादी, यस्य वादिव्यपदेशवत स्वस्य स्वयमेव कदाचित्सवादी च भवति, अत्र चकार एवार्थे सवाद्येवेति, अनुवादी स्वरो ऽपर, यस्यानुवादी त्वपर एव स्वरो भवति, न कदाचिदपि स्वस्य स्वयमनुवादीत्यर्थ, यथा लोके राजा प्रयोजनवशात्कचिदमात्य-कृत्यकारी भवति न कदाचिदपि भृत्यकृत्यकारी, तद्वत्, यश्च न्यासापन्यास विन्याससन्यासग्रहता गत सन्प्रयोगे बहुलो भवति, तस्य न्यासादि-रूपापत्ति प्रयोगबाहुल्ये हेतु, स वादी योग्यतावशादश स्यात् । योग्यता नामात्र यथायोग रक्तिव्यञ्जकत्वाद्युक्तलक्षणार्हत्वम् । तथा ऽऽह भरत —

'रागश्च यस्मिन्वमति यस्माच्चैव प्रवर्तते ।
नेता च तारमन्द्राणा यो ऽत्यर्थमुपलभ्यते ॥
ग्रहापन्यासविन्याससन्यासन्यासयोगत ।
अनुवृत्तश्च यश्चेह सो ऽश स्याद्दशलक्षण ॥'

[1] विवक्षितस्य

इति । नन्वशो ग्रह इति भरतादेशेन सर्वेष्वप्यशधर्मेषु ग्रहस्य प्राप्तेषु ग्रहाशयो को विशेष इति चेत्, उच्यते—ग्रहस्याशातिदेशतस्तु प्राप्त न केवल वादित्वमेव धर्म, अपि तु वादित्वादिचतुष्टयमपीति तयोर्भेद इति । यथोक्त मतङ्गेन—'अशो वाद्येव पर ग्रहस्तु वाद्यादिभेदभिन्नश्चतुर्विध' इति ॥ दशानामपि लक्षणाना सप्तषष्टिरूपत्वाद्बहुलत्वमेवाशस्य नियत लक्षणमित्याह—**बहुलत्वमिति** । प्रयोगे बहुलत्व व्यापकमशलक्षणमिति सबन्ध । **व्यापकमिति** । यो ऽश स बहुल इत्यविनाभावात् ॥ २९—३४ ॥

(सु०) त्रयोदशविध जातिलक्षण विभजते—**ग्रहाशेति** । **षाडवौडुविते क्वापीति** । या कार्मारव्यादयश्चतस्रो नित्यपूर्णास्ता विहायेत्यर्थ । ग्रहलक्षण कथयति—**गीतादीति** । गीतस्य जात्यादेरादौ य स्वर प्रयुज्यते स ग्रह इत्युच्यते । तत्रेति । तत्र 'य स्वरो ऽश स एव ग्रह' इति नियमादश ग्रहयोरेकोक्तावुभय लभ्यते । नन्वेव तर्हि ग्रहाशयो को भेद ? उच्यते—अशो वाद्येव परम्, ग्रहस्तु वाद्यादिभेदभिन्नश्चतुर्विध, अशश्च रागजनकत्वात्प्रधानम्, ग्रहस्त्वप्रधानमिति तयोर्भेद ॥ ९—३१ ॥ अशलक्षण कथयति—**यो रक्तिव्यञ्जक** इति । यो गीते रञ्जकत्व व्यनक्ति, यस्य सवाद्यनुवादी च विदार्या बहुल । ननु विदारीशब्देन किमुच्यते ? विदार्यते खण्ड्यते गीत पद वा यया सा विदारी । सा द्विविधा गीतविदारी पदविदारी चेति । सा विशेषेण तालाध्याये निरूपयिष्यते । यमवधि कृत्वा मन्द्रतारव्यवस्था, यो वा यस्य सवाद्यनुवादी वा न्यासत्वमपन्यासत्व विन्यासत्व सन्यासत्व ग्रहत्व च प्राप्नोति, यस्य जात्यादिप्रयोगे बाहुल्य सवाद्यशश्चेत्युच्यते । **योग्यतावशादिति** । प्राधान्याद्वादिशब्दवाच्यत्वमन्यैर्लक्षणैरशशब्द वाच्यत्वमिति । प्रयोगे बाहुल्यमेव मुख्य लक्षणमशस्येति कथयति—**बहुलत्वमिति** । ननु कथमस्याशशब्दवाच्यत्वम् ? अशशब्देन भाग उच्यते, अयमपि जातिरागादिविभागकारित्वादशशब्देनोच्यते, कारणे कार्यवदुपचारात् ॥ ३२—३४ ॥

**मध्यमे सप्तके ऽशः स्यात्तस्मात्तारस्थितात्परान् ।**
**स्वराश्चतुर आरोहेदेष तारावधिः पर ॥ ३५ ॥**
**अर्वाक्तु कामचारः स्यात्तारे लुप्तो ऽपि गण्यते ।**
**आतारषड्जमारोहो नन्दयन्त्या प्रकीर्तितः ॥ ३६ ॥**

(क०) अथ तारव्यवस्थामाह—**मध्यमे सप्तके ऽश स्यादिति ।** मध्यमे सप्तके, मध्यस्थानस्थितेषु षड्जादिषु सप्तसु स्वरेष्वित्यर्थ । अश स्यात्, षड्जमध्यमग्रामयो प्राधान्यात्प्राबल्याच्च यस्मिन्ग्रामे यश्चतु श्रुतिको ऽश षड्जो वा मध्यमो वा भवेत् । तारस्थिताद् द्विगुणात्तस्मात्षड्जाद्वा मध्यमाद्वा पराश्चतुर स्वरान् । मध्यमग्रामे तावत्तस्मादिति तारमध्यमपरामर्शे तस्मादिति ल्यब्लोपे पञ्चमी । तमारभ्येत्यर्थ । तेन सह पराश्चतुरो मपधनीनारोहेदित्यर्थ । षड्जग्रामे तु तस्मादिति तारषड्जपरामर्शे तस्मादित्यवधौ पञ्चमी । तत पराश्चतुर स्वरान्रिगमपानारोहेदिति । एष तारावधि, एष उक्तप्रकारस्तारावधि । परो निरतिशय । कुत ? मध्यमग्रामे तारनिषादात्परस्य स्वरस्यासभवादेव, षड्जग्रामे तु तारपञ्चमात्परयो धैवतनिषादयो सभवे, शक्तौ च सत्यामपि तत्र प्रयोगे रक्तेरभावादिति ॥ **अर्वाक्त्विति ।** अर्वाङ् न्यूनतारावधित्वेनोक्तयोर्निषादपञ्चमयोरधस्तात्तारे स्थितेषु यस्य कस्यचिदवधित्वे तु कामचार, गातुरशक्तयेच्छया वा प्रवर्तनम् । **तारे लुप्तो ऽपि गण्यत** इति । तारे तारव्यवस्थाविषये । चतुर आरोहेदित्यत्र चतुर्षु मध्ये प्रयोगलक्षणवशादेकस्य स्वरस्य लोपे सत्यप्यारोहगणनाया सो ऽपि गृह्यते । नन्दयन्त्या जातेरपि मध्यमग्रामीणत्वात्तारव्यवस्थाया चतु स्वरारोहे तारमध्यमस्य प्रारम्भावधित्वे प्राप्ते, तदपवादत्वेन तारषड्जस्य भरतादिमतात्परावधित्व रुद्रटादिमतात्पूर्वावधित्व च विहितमित्यभिसधाय तन्त्रेणाह—**आतारषड्जमिति ।** परावधित्व आ तार-

षड्जात्तारषड्जपर्यन्तमारोह प्रकीर्तितो भरतादिभिरित्यर्थ । यथा ऽऽह भरत —

'तारगत्या तु षड्ज च कदाचिन्नातिवर्तते'

इति । तत्पूर्वावधित्वे त्वातारषड्ज तारषड्जमारभ्यारोह सामान्यत प्राप्त-चतुर्थस्वरारोह । सामान्यत प्रकीर्तितो रुद्रटादिभिरित्यर्थ । यथा यावत्षड्जमेव तारगतिर्मध्यमस्याप्यत्र सवादित्वादनाशित्वाच्च तारगती रुद्रटेन कृता मध्यमस्येति न दोष इति मतङ्गोक्तम् । अयमाशय —नन्दयन्त्या हृष्यकामूर्च्छनाऽन्वितत्वेन पञ्चमाशत्वान्मन्द्रव्यापकत्वेन तारगते सकोच-स्त्वाचार्यैं कृत इति । सामान्या तारव्यवस्था तु भरतोक्ता । यथा—

'अशात्तारगति विद्यादा चतुर्थस्वरादिह ।
आ पञ्चमात्सप्तमाद्वा नात परमिहेष्यते ॥'

इति । तरतेर्णिजन्तात्तार्यत इति कर्मणि घञि दूरश्राव्यस्य मूर्धन्यस्य ध्वनेस्तार इति सज्ञा ॥ ३५, ३६ ॥

(सु०) तारलक्षण कथयति—मध्यम इति । मध्यसप्तकस्थितो यो ऽशस्वर , तस्मादेव तारस्थिताच्चतु स्वरपर्यन्तमारोहण कर्तव्यम् । अयमारोहे परो ऽवधिरुक्त । तत परमारोहण न कर्तव्यम् । अर्वाक्तु स्वेच्छया तारगति । तारे लुप्तो ऽपि स्वरो ग्राह्य । भरतेन चतुर्थपञ्चमसप्तमस्वरपर्यन्त तारगतिरुक्ता । यदाह—

'अशात्तारगति विद्यादा चतुर्थस्वरादिह ।
आ पञ्चमात्सप्तमाद्वा नात परमिहेष्यते ॥'

इति । आतारेति । नन्दयन्त्या तारषड्जपर्यन्तमेवारोहण कर्तव्यम् । पूर्वोक्त-स्यायमपवाद ॥ ३५, ३६ ॥

**मध्यस्थानस्थितादशाढामन्द्रस्थाशमाव्रजेत् ।**
**आमन्द्रन्यासमथ वा तदध स्थरिधावपि ॥ ३७ ॥**
**एषा मन्द्रगतेः सीमा ततो ऽर्वाक्कामचारिता ।**
**गीते समाप्तिकृन्न्यास एकविशतिधा च सः ॥ ३८ ॥**

(क०) **मध्यस्थानस्थितादि**ति । अशाद् ग्रामापेक्षया षड्जाद्वा मध्यमाद्वा । अत्रापि ल्यब्लोपे पञ्चमी—अशमारभ्येति । आमन्द्रस्थाश यथाग्राम मन्द्रस्थानस्थितषड्जपर्यन्त तादृशमध्यमपर्यन्त वा । आङत्राभिविधौ । आव्रजेदागच्छेत् । अनेन मध्यस्थानस्थितस्याशस्य प्रायेण प्रारम्भो गम्यते । जातिप्रयोगे षडजमन्द्रव्यवस्थायामयमेक पक्ष । अथ वा, आमन्द्रन्यास मन्द्रस्थानस्थितन्यासस्वरपर्यन्तम् । आङभिविधौ । अत्र न्यासशब्देन ग्रामयोरन्तिमौ गाधारनिषादौ विवक्षितौ, न तु जात्यादिगीतसमापक । तौ च व्यत्यासेन षाड्जग्रामिके प्रयोगे मन्द्रगाधारो न्यास, माध्यमग्रामिके प्रयोगे मन्द्रनिषादो न्यास इति ग्रामयोर्मन्द्रावधी भवत । अत्र लिङ्ग षड्जग्रामीणया ऽपि षड्जकैशिक्या मन्द्रगाधारस्य न्यासत्वदर्शनमिति द्वितीय पक्ष । तदध स्थरिधावपीति तृतीय पक्ष । अत्रापिशब्दो विकल्पार्थो रिधौ वेति । तच्छब्देन ग्रामन्यासतया विवक्षितौ गाधारनिषादौ परामृश्येते । तयोरध स्थौ रिधावित्यनेन क्रमेण ग्रामविवक्षया न्यासयोर्व्यत्यास एव दर्शित । यथोक्त भरतेन—"त्रिधा मन्द्रगतिरशपरा न्यासपरा ऽपन्यासपरा चेति ।

मन्द्रस्त्वशात्परो नास्ति न्यासे तु द्वौ व्यवस्थितौ ।
गाधारन्यासलिङ्गेन दृष्टमृषभसेवनम् ॥"

इति । एषा पक्षत्रये ऽन्यतमाश्रया मन्द्रगतेर्मन्द्रस्थस्वरावरोहस्य सीमा ऽवधि । तत उक्तावधेरर्वाङ् न्यूनताया कामचारिता गातुरिच्छया ऽशक्त्या

**षाड्ज्यादीना तु सप्ताना न्यासः स्यान्नामकृत्स्वर ।**
**द्वौ नामकारिणौ षड्जमध्यमाया तु तौ मतौ ॥ ३९ ॥**
**उदीच्यवात्रय मान्त निपगान्ता तु कैशिकी ।**
**कार्मारवी पञ्चमान्ता गान्ताः पञ्चापराः स्मृताः ॥ ४० ॥**

वा ऽप्रवर्तमानत्वम् । 'मदी हृषे' इत्यस्माण्णिजन्तान्मदयतीति कर्तरि रप्रत्यये रूपम् । ह्रस्वस्य ध्वनेर्मन्द्र इति सज्ञा ॥ अथ न्यास — **गीते समाप्तिकृदिति** । गीते जात्यादिप्रयोगे समाप्तिकृन्निरपेक्षावसानकारी स्वरो न्यास , न्यस्यते त्यज्यते येन गीतमिति करणे घञि न्याससञ्ज्ञक । स चाष्टादशसु जातिष्वेकविशतिधा वक्ष्यमाणप्रकारेण ॥ ३७, ३८ ॥

(सु०) मन्द्र निरूपयति—**मध्यस्थानेति** । मन्द्रस्थानस्थितादशस्वरान्मन्द्राशस्वरपर्यन्तमवरोहण कर्तव्यम्, मन्द्रन्यासस्वरपर्यन्त वा, मन्द्रस्थानस्थषभधैवतपर्यन्त वेति पक्षत्रयम् । एषा मन्द्रगते परा काष्ठोक्ता । अर्वाक्तु स्वेच्छया मन्द्रगति । न्यासलक्षण कथयति—**गीत इति** । यस्तु गीतसमापको गीतस्य जात्यादेरन्ते तिष्ठति स न्यास इत्युच्यते । न्यस्यते त्यज्यते यस्मिन्येन वा गीतमिति स न्यास । स चैकविशतिप्रकारो भवति ॥ ३७, ३८ ॥

(क०) तदेव विवृणोति—**षाड्ज्यादीनामित्यादिना** । सप्ताना शुद्धाना विकृतभेदैश्च सहिताना नामकृदिति, षाड्ज्या षड्ज आर्षभ्यामृषभ इत्येवम् । नान्य इति तुशब्दार्थ । **उदीच्यवात्रयमिति** । षड्जोदीच्यवा गाधारोदीच्यवा मध्यमोदीच्यवा च त्रिक मान्त मध्यमन्यासकम् । अपरा पञ्च षड्जकैशिकी रक्तगाधारी गाधारपञ्चम्यान्ध्री नन्दयन्ती चेति । स्मृता , भरतादिभिरिति शेष ॥ ३९, ४० ॥

(सु०) एकविशतिप्रकारतामेव विशदयति—**षाड्ज्यादीनामिति** । षाड्ज्यादीना सप्ताना नामस्वरा सप्त न्यासा । षड्जमध्यमाया षड्जमध्यमौ न्यासौ ।

अपन्यासस्वरः स स्याद्यो विदारीसमापक ।
कार्मारव्या च नैषाद्यामान्ध्रीमध्यमयोस्तथा ॥ ४१ ॥
आर्षभ्या च स्वरा ये ऽशास्ते ऽपन्यासाः प्रकीर्तिताः ।
उदीच्यवाना त्रितये ऽपन्यासौ षड्जधैवतौ ॥ ४२ ॥
मध्यमो रक्तगाधार्या गाधार्या षड्जपञ्चमौ ।
सनिपा षड्जकैशिक्या पञ्चम्या निरिपाः स्मृताः ॥ ४३ ॥
रिपौ गाधारपञ्चम्या षाड्ज्या गाधारपञ्चमौ ।
धैवत्या रिमधाः प्रोक्ता नन्दयन्त्या मपौ मतौ ॥ ४४ ॥
रिवर्ज्याः षट् च कैशिक्या सप्तापीत्यूचिरे परे ।
सप्तस्वरापन्यासा तु भाषन्ते षड्जमध्यमाम् ॥ ४५ ॥
अत्र ये ऽन्त्या अपन्यासास्ते स्युरेकोनविशतिः ।
सप्तत्रिशत्परे ते च षट्पञ्चाशत्तु सयुता ॥ ४६ ॥
कैशिक्या सप्तपक्षे तान्सप्तपञ्चाशत विदु ।

षड्जोदीच्यवागाधारोदीच्यवामध्यमोदीच्यवाना मध्यमो न्यास । कैशिक्या निषादपञ्चमगाधारा । कार्मारव्या पञ्चम । अवशिष्टाना पञ्चाना गाधारो न्यास । एवमेकविशतिर्न्यासा ॥ ३९, ४० ॥

(क०) अथापन्यास —**अपन्यासस्वरः स स्यादित्यादिना सप्तपञ्चाशत विदुरित्यन्तेन** निरूपित स्पष्ट । अपन्यस्यते प्रयोगो येनेत्यपन्यास । अपन्यसन च न्यासत्वापगमे त्ववान्तरविच्छेदकारित्वान्नयासवत्प्रतिभासनम् ॥ ४१–४६ ॥

(सु०) अपन्यास लक्षयति—अपन्यास इति । य स्वरो विदार्या गीतावयवस्य समापक सो ऽपन्यास । मतङ्गेनाप्युक्तम्—'यत्र समाप्तमिव

अशाविवादी गीतस्याद्यविदारीसमाप्तिकृत् ॥ ४७ ॥
सन्यासो ऽशाविवाद्येव विन्यासः स तु कथ्यते ।
यो विदारीभागरूपपदप्रान्ते ऽवतिष्ठते ॥ ४८ ॥
अलङ्घनात्तथा ऽभ्यासाद्बहुत्व द्विविध मतम् ।
पर्यायाशे स्थित तच्च वादिसवादिनोरपि ॥ ४९ ॥

गीत प्रतिभासते सो ऽपन्यास । स च विदारीमध्ये भवति । गीतशरीरमध्य इत्यर्थ ।' इति । अपन्यासान्परिगणयति—**कार्मार** यामिति । कार्मारवी-नैषाद्यान्ध्रीमध्यमाऽऽर्षभीणामशा एवापन्यासा । षड्जोदीच्यवागाधारोदीच्यवा-मध्यमोदीच्यवाना षड्जधैवतावपन्यासौ । रक्तगाधार्या मध्यम । गाधार्या षड्ज-मध्यमौ । षड्जकैशिक्या षड्जपञ्चमनिषादा । पञ्चम्या निषादर्षभपञ्चमा । गाधारपञ्चम्यामृषभपञ्चमौ । षाड्ज्या गाधारपञ्चमौ । धैवत्यामृषभमध्यमधैवता । नन्दयन्त्या मध्यमपञ्चमौ । कैशिक्यामृषभवर्जिता षट् स्वरा अपन्यासा । सप्तापि स्वरा इति केषाचिन्मतम् । षड्जमध्यमाया सप्त स्वरा । अत्राशा एवा-पन्यासा । त एकोनविशति । अन्ये सप्तत्रिशत् । मिलिता षट्पञ्चाशत् । यदि कैशिक्या सप्तापन्यासास्तदा सप्तपञ्चाशदपन्यासस्वरा भवन्ति ॥ ४१—४६- ॥

(क०) अथ सन्यासविन्यासौ—अशाविवादी, यस्मिन्प्रयोगे ो ऽशस्तस्याविरोधी सवादीत्यर्थ । गीतस्याद्यविदारीसमाप्तिकृत्प्रथम भा पक । अनेनापन्यासस्यातिरिक्तविदारीविषयत्व विज्ञेयम् । विन्यास स तु कथ्यते । स इति वक्ष्यमाणपरामर्श । अशाविवादित्वमुक्तमेव । विदारी-भागरूपपदप्रान्ते, विदार्या भागरूपाणि वर्णालकारादियुक्तस्य रागस्य वाक्यस्थानीयस्यावयवभूतानि पदवत्पदानि, तेषा स्वरसमुदायात्मना प्रान्ते यो ऽवतिष्ठत इति सबन्ध । विवादिव्यतिरिक्ताना सर्वेषामपि स्वराणा सन्यासविन्यासत्वसभवेन बहुत्वादेतयो सख्या नोक्ता ॥ अथ बहुत्वम्—अलङ्घनादिति । लङ्घनमीषत्स्पर्श स्वरस्य स्थानप्रयत्नकृतस्वरूपन्यूनता,

